काव्यमाला ११.

महाकविश्रीमदभिनन्दविरचितः

# कादम्बरीकथासारः ।



मूल्यं



KÂVYAMÂLÂ. 11.

# THE
# KÂDAMBARÎKAṬHÂSÂRA

OF

## ABHINANDA.

EDITED BY

PAṆDIT DURGÂPRASÂDA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Third Revised Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS.

BOMBAY.

1925.

Pri



काव्यमाला. ११.

महाकविश्रीमदभिनन्दविरचितः

# कादम्बरीकथासारः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च संशोधितः,
स च पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा च संस्कृतः ।

तृतीयावृत्तिः ।

स च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्रकाशितः ।

१९२५

मूल्यं



# काव्यमाला।

## काश्मीरकमहाकविश्रीमदभिनन्दप्रणीतः

## कादम्बरीकथासारः।

### प्रथमः सर्गः।

श्रियं दिशन्तु वः शौरेर्द्वये तुल्यश्रमाः क्रमाः।
ये चादौ गोष्पदं पश्चात्त्रैलोक्यं क्राम्यतश्च ये ॥ १ ॥

सरसाः सदलंकाराः प्रसादमधुरा गिरः।
कान्तास्तातजयन्तस्य जयन्ति जगतीगुरोः ॥ २ ॥

---

१. अयमभिनन्दमहाकविः कश्मीरेषु खिस्ताब्दीयाष्टमशतकोत्तरभागे समुत्पन्न इति प्रतीयते, यतोऽस्य पञ्चमः पूर्वपुरुषः शक्तिस्वामी कर्कोटवंशोद्भवस्य मुक्तापीडनरपतेर्मन्त्रिप्रवर आसीदित्यत्रैव ग्रन्थारम्भे स्फुटमस्ति. मुक्तापीड इति तु सप्तमशतकोत्तरभागे कश्मीरान्पालयतो ललितादित्यस्य नामान्तरमस्तीति राजतरङ्गिण्यां (४।१९-४२) प्रसिद्धमेव. तस्माद्बाणभट्टानन्तरं किंचिन्न्यूनाधिकसार्धशतवर्षेष्वतीतेष्वभिनन्दः समुत्पन्न इति सुव्यक्तमेव. दशमशतकसमाप्तिसमुद्भूतः श्रीमदाचार्योभिनवगुप्तोऽपि ध्वन्यालोकलोचने तृतीयोद्द्योते कादम्बरीकथासारस्य स्मरति स्म. एवं क्षेमेन्द्रः सुवृत्ततिलके तृतीयविन्यासे 'तस्यां निजभुजोद्योग-' (१।१६) इत्यादि पद्यम्' भोजदेवश्च सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदे 'चन्द्रापीडं सा च जग्राह कण्ठे-' (८।७९) इत्यादि पद्यं कादम्बरीकथासारस्थमुदाहृतवान्. सुवृत्ततिलके 'अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दिनी। विद्याधरस्य वदने गुलिकेव प्रभावभूः ॥' इत्यनुष्टुप्छन्दोनिर्माणेऽभिनन्दकविं क्षेमेन्द्रः स्तौति स्म. कादम्बरीकथासारमपहायान्यः कोऽपि ग्रन्थोस्य कवेर्नोपलभ्यते. रामचरितकाव्यस्य प्रणेता तु कश्चिदन्य एव शतानन्दसुनुरभिनन्दोऽस्ति. ग्रन्थोऽयं पण्डितापरनाम्नि काशीविद्यासुधानिधौ मासिकपत्रे १८६७ खिस्ताब्दे प्रथमद्वितीयभागयोर्मुद्रितोऽपि न सर्वसुलभो नातिशुद्धश्चेति पुनरेतस्य मुद्रणमस्माभिरुपक्रान्तम्. तत्र काश्मीरकपुस्तकस्य प्रतिरूपकमेकं पुस्तकं प्रायः शुद्धमष्टत्रिंशत्पत्रात्मकं श्रीपण्डितसरयूप्रसादशर्मणां सकाशादधिगतं क-संज्ञकम्. अपरं चतुरशीतिपत्रात्मकं १८०९ मिते विक्रमाब्दे लिखितं नातिशुद्धं पण्डितमुद्रितपुस्तकस्य सहोदरमिव राजगुरुपर्वणीकरनारायणभट्टानां संग्रहात्प्राप्तं ख-संज्ञकम्. एतत्पुस्तकद्वयाधारेणैतन्मुद्रणमारभ्यत इति शिवम्. २. 'कामतः' ख. ३. 'जगतांगुरोः' ख.

गुणोद्द्योतनदीपानां सतां न परमुज्ज्वलम् ।
यावन्मलिनमप्येषां कर्म दृष्टेः प्रसाधनम् ॥ ३ ॥

गुणः कृशोऽपि प्रथते पृथुरप्यपचीयते ।
प्राप्य साधुखलौ चन्द्रः पक्षाविव सितासितौ ॥ ४ ॥

[1]**शक्ति**नामाभवद्गौडो भारद्वाज[2]कुले द्विजः ।
[3]दार्वाभिसारमासाद्य कृतदारपरिग्रहः ॥ ५ ॥

तस्य **मि[4]त्रा**भिधानोऽभूदात्मजस्तेजसां निधिः ।
जनेन [5]दोषोपरमप्रबुद्धेनार्चितोदयः ॥ ६ ॥

स **शक्तिस्वामिनं** पुत्रमवाप [6]श्रुतशालिनम् ।
राज्ञः कर्कोटवंशस्य मुक्तापीडस्य मन्त्रिणम् ॥ ७ ॥

**कल्याणस्वामि**नामास्य याज्ञवल्क्य इवाभवत् ।
तनयः शुद्धयोगर्द्धिनिर्धूतभवकल्मषः ॥ ८ ॥

अगाधहृदयात्तस्मात्परमेश्वरमण्डनम् ।
अजायत सुतः **कान्त**श्चन्द्रो दुग्धोदधेरिव ॥ ९ ॥

पुत्रं कृतजनानन्दं स **जयन्त**मजीजनत् ।
[7]आसीत्कवित्ववक्तृत्वफला यस्य सरस्वती ॥ १० ॥

वृत्तिकार इति व्यक्तं द्वितीयं नाम बिभ्रतः ।
वेदवेदाङ्गविदुषः सर्वशास्त्रार्थवादिनः ॥ ११ ॥

जयन्तनाम्नः सुधियः साधुसाहित्यतत्त्ववित् ।
सूनुः समुदभूत्तस्माद**भिनन्द** इति श्रुतः ॥ १२ ॥ (युग्मम्)

काव्यविस्तरसंधानखेदालसधि[8]यः प्रति ।
तेन कादम्बरीसिन्धोः कथामात्रं समुद्धृतम् ॥ १३ ॥

---

१. 'शक्तिर्नामा' ख. २. 'कुलो' ख. ३. दार्वाभिसारः कश्मीरदेशे कश्चन ग्रामोऽस्ति, यो राजतरङ्गिण्यामपि वहुषु स्थलेषु वर्णितः. ख-पुस्तके, काशीविद्यासुधानिधिमुद्रिते च पुस्तके 'दीर्घाभिसारं' इति पाठोऽस्ति. ४. मित्रः सूर्योऽपि. ५. दोषा रात्रिरपि. ६. 'श्रुतिशालिनम्' ख. ७. 'व्यक्ता कवित्व-' ख. ८. 'धियं प्रति' ख.

पुरुहूतपुरस्पर्धिविभ[1]वा भूषणं भुवः ।
बभूव विदिशानाम पुरी वेत्रवतीतटे ॥ १४ ॥

या पुण्यकर्मिणां तेजःशालिनां द्यौरिवास्पदम् ।
रेजे रत्नगृ[2]हज्योतिर्जालैरिन्द्रायुधप्रभैः ॥ १५ ॥ (यु[3]ग्मम्)

तस्यां निजभुजोद्योगविजितारातिमण्डलः ।
आखण्डल इव श्रीमान्राजा शूद्रक इत्यभूत् ॥ १६ ॥

अष्टानां लोकपालानां रूपं बिभ्रदपि प्रजाः ।
शश्वदानन्दयंस्ताभिश्चन्द्रमा इत्यवेदि यः ॥ १७ ॥ (यु[4]ग्मम्)

स मेदिनीं विनिर्जित्य च[5]तुरम्भोधिमेखलाम् ।
सचिवार्पिततद्भारस्तस्या[6]मास्त यथासुखम् ॥ १८ ॥

तेनानुद्वेजितजनैर[7]र्थधर्माविरोधिभिः ।
विनोदै[8]रत्यनीयन्त नवे वयसि वासराः ॥ १९ ॥

तस्य चानन्यलभ्यानां सुखानां पारदृश्वनः ।
यूनोऽपि सुरतक्रीडापराङ्मुखमभून्मनः ॥ २० ॥

प्रयत्नेनापि नावापि सा योषिद्विषमेषुणा ।
हर्तुं शशाक या तस्य हृदयं चक्षुरेव वा ॥ २१ ॥

अथ वाह्याङ्गणस्थानवर्तिनं तं कदाचन ।
प्रसृत्य प्र[9]णयप्रह्वा प्रतीहारी व्यजिज्ञपत् ॥ २२ ॥

दूरादुपायनीकृत्य शुकमाश्चर्यचेष्टितम् ।
चण्डालदारिका काचिदागता दर्शनार्थिनी ॥ २३ ॥

श्रुत्वा क्षणं परामृश्य मुखमालोक्य [10]मन्त्रिणाम् ।
समादिदेश तां राजा को दोषः प्रविशत्विति ॥ २४ ॥

---

१. 'विभावा' क. 'पुरुहूत' इत्याद्यर्धश्लोकः ख-पुस्तके, पण्डितपत्रे (काशीविद्यासुधानिधौ) च त्रुटितः. २. 'बृहज्ज्योति–' क. ३. ख-पुस्तके नास्ति. ४. ख-पुस्तके नास्ति. ५. 'चतुर्जलधि–' क. ६. 'आस्ते' ख. ७. 'अन्योन्यमविरोधिभिः' ख. ८. 'अभ्यनीयन्त' क. ९. 'विनयप्रह्वः प्रतीहारो' क. १०. 'मन्त्रिणः' ख.

निजेन लक्ष्मणा लोकस्पर्शं परिहरन्त्यथ ।
मातङ्गकन्यकाविक्षदनुज्ञाता नृपाङ्गणम् ॥ २५ ॥
[1]तया च सह हस्तस्थसशुकस्वर्णपञ्जरः ।
वहन्नहिंस्रमाकारं चण्डालस्थविरोऽविशत् ॥ २६ ॥
प्रविशन्तीं तु तां दृष्ट्वा कन्यामद्भुतदर्शनाम् ।
परं व्यस्मयत क्ष्मापः क्षणं चैवमचिन्तयत् ॥ २७ ॥
इदं रूपमियं कान्तिरिमे लावण्य[2]शीकराः ।
[3]मर्त्यतामपि न प्राहुर्मातङ्गत्वे तु का कथा ॥ २८ ॥
[4]तत्सत्यमेव पश्यामि नूनं मातङ्गमायया ।
छन्नेयं देवता काचिन्मर्त्यलोकमुपागता ॥ २९ ॥
इत्यादि चिन्तयन्तं सा प्रगल्भवनितेव तम् ।
प्रणनाम महीपालमनाकुलविलोकिनी ॥ ३० ॥
ततः क्षितितलन्यस्तजानुः प्रणतकंधरः ।
गाढोभयकरासक्तपञ्जरः स्थविरोऽब्रवीत् ॥ ३१ ॥
वैशम्पायननामायं रत्नमत्यद्भुतं शुकः ।
[5]रत्नानां चास्पदं देवो दुग्धोदधिरिवापरः ॥ ३२ ॥
[6]इत्यादरेण नः स्वामिदुहित्रायमुपाहृतः ।
प्रसादः क्रियता[7]मस्या विहगः परिगृह्यताम् ॥ ३३ ॥
इत्युक्त्वा सोऽग्रतो राज्ञः पञ्जरं मणिकुट्टिमे ।
विनिधाय प्रणम्यैनं सप्रश्रयम[8]भ्यपासरत् ॥ ३४ ॥
इङ्गितज्ञा प्रतीहारी विवृतद्वारसंपुटम् ।
अकरोत्पञ्जरं तस्मान्निर्ययौ च विहंगमः ॥ ३५ ॥
उत्क्षिप्य दक्षिणं पादं जयशब्दमुदीर्य सः ।
[9]प्रयुक्तवेदमन्त्राशीरिमामार्यामथापठत् ॥ ३६ ॥

१. 'तया सह च' ख. २. 'सीकराः' ख. ३. 'अमर्त्या अपि न प्रापुः' ख. ४. 'मेनकामिव' ख. ५. 'रत्नानामास्पदं' क. ६. 'अत्यादरेण' ख. ७. 'अस्यां पतगः' ख. ८. 'उपासरत्' क. ९. 'अधीतवेद-' क.

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ३७ ॥

[1]तामाकर्ण्य महीपालो विस्मयोत्फुल्ललोचनः ।
कुमारपालनामानं प्रधानामात्यमब्रवीत् ॥ ३८ ॥

दृष्टं भवद्भिराश्चर्यमीदृशं श्रुतमेव [3]वा ।
ति[4]र्यक्त्वेऽतिशयः सोऽयं यो मनुष्येषु दुर्लभः ॥ ३९ ॥

[5]श्रुताध्ययनसंस्कारो मातङ्गजनसंगतिः ।
मातङ्गेषु च कन्येयमित्या[6]श्चर्यपरम्परा ॥ ४० ॥

अमात्यस्त्वभ्यधा[2]द्दे[7]वं पूर्वसंस्कारकारिताः ।
भव[8]न्त्यतिशयाः प्रायः प्राणिनां कोऽत्र विस्मयः ॥ ४१ ॥

एतानि तानि लिङ्गानि परलोकानुमां प्रति ।
तार्किकै[9]रुपपाद्यन्ते लोकायतनि[10]राकृतौ ॥ ४२ ॥

विचित्रा वेधसः सृष्टिर्वि[11]चित्रा कर्मवासना ।
वि[12]चित्रैस्तद्विपाकश्च विचित्रः कालपर्ययः ॥ ४३ ॥

इत्यादिशुकसंबन्धिकथाविच्छेदकारणम् ।
उद्भूतारगम्भीरो मध्याह्नपटहध्वनिः ॥ ४४ ॥

बहिः [13]प्रकल्प्यतामस्याः [14]सुखायावसथादिकम् ।
अयं चाभ्यन्तरं पत्ररथभूपः प्रवेश्यताम् ॥ ४५ ॥

इत्यादिश्य प्रतीहारीं सभामौज्झन्महीपतिः ।
विससर्ज च राजन्यचक्रं सेवार्थमागतम् ॥ ४६ ॥

ततः कृताल्पव्यायामः स्नातः पूजितदैवतः ।
हुताग्निः श्रुतविप्राशीर्भुक्त्वा शय्यागृहं ययौ ॥ ४७ ॥

---

१. 'तदाकर्ण्य' क. २. 'अभ्यधात्' क. ३. 'च' ख. ४. 'तिर्यक्त्वातिशयः' क. ५. 'कुतोऽध्ययन–' क. ६. 'चित्रपरम्परा' ख. ७. 'एनं' ख. ८. 'मतयः' ख. ९. 'प्रतिपाद्यन्ते' ख. १०. 'निराकृतेः' ख. ११. 'विचित्राः कर्मवासनाः' ख. १२. 'विचित्रास्तद्विपाकाश्च' ख. १३. 'प्रकल्पतां' क-ख. १४. 'सुखं' ख.

तत्र पर्यङ्कमारुह्य [1]ध्यात्वैव किमपि क्षणम् ।
तमन्तःपुरविश्रान्तं शुकमानाययत्पुनः ॥ ४८ ॥
तं च कञ्चुकिनानीतमादौ पृष्ट्वा [2]सुखासिकाम् ।
पप्रच्छ कौतुकाक्षिप्तस्तद्वृत्तान्तमनन्तरम् ॥ ४९ ॥
वैशम्पायन को नु त्वं क्व जातः क्वोषितश्चिरम् ।
कुतस्त्यमिदमीदृक्ते कलाशास्त्रादि कौशलम् ॥ ५० ॥
मन्ये जातिस्मरः कोऽपि भवान्भूमिमि[3]मां गतः ।
नह्यस्त्यतिशयप्राप्तिरियती पक्षिजातिषु ॥ ५१ ॥
केन वा भवतो नाम कृतं विप्रजनोचितम् ।
ईदृशान्यभिधानानि कुतो[4]ऽन्त्यजनवेश्मसु ॥ ५२ ॥
कथं [5]चण्डालसंपर्क इह वा कथमागमः ।
इति कार्त्स्न्येन वृत्तान्तमात्मनो वक्तुमर्हसि ॥ ५३ ॥
इति पृष्टः क्षितीशेन बहुमानपुरःसरम् ।
क्षणं बुद्ध्यानुसंधाय शुको वक्तुं प्रचक्रमे ॥ ५४ ॥
देव विन्ध्याटवी तावत्तव श्रुतिपथं गता ।
पूर्वापरपयोराशिवेलासंस्पर्शशालिनी ॥ ५५ ॥
यदेकदेशे कण्डूलगण्डेभदलितद्रुमे ।
उषितौ दण्डकारण्ये ससीतौ रामलक्ष्मणौ ॥ ५६ ॥ (युग्मम्)
यत्रागस्त्यमुनेरासीदाश्रमः शमिनां मतः ।
लोपामुद्राकराक्षिप्तजलसंवर्धितद्रुमः ॥ ५७ ॥
तस्योपकण्ठे पम्पाख्यमस्ति पुण्यजलं सरः ।
सीताकरतलोल्लूनश्रवणाभरणोत्पलम् ॥ ५८ ॥
तस्यास्ति पश्चिमे तीरे जीर्णः शाल्मलिपादपः ।
आरोहपरिणाहाभ्यां व्याप्तव्योमदिगन्तरः ॥ ५९ ॥

१. 'ध्यात्वा वै' ख. २. 'सुखादिकं' ख. ३. 'इहागतः' क. ४. 'अन्यजन-' ख. ५. 'चाण्डाल-' ख.

तस्मिन्कृतकुलायानि वीतभीतीनि दुर्गमे ।
विहंगमसहस्राणि निवसन्ति निरन्तरम् ॥ ६० ॥
दिवा तान्यभिनिर्वर्त्य प्राणयात्रामितस्ततः ।
तत्रागत्य स्वनीडेषु सुखं रात्रिषु शेरते ॥ ६१ ॥
तत्रैव बद्धवसती अभूतां पितरौ मम ।
जातोऽहमेकैस्तनयस्तयोर्वयसि पश्चिमे ॥ ६२ ॥
उद्वोढुमसमर्था सा तीव्रां प्रसववेदनाम् ।
तयैव पञ्चतां नीता जननी मे दुरात्मनः ॥ ६३ ॥
जायावियोगदग्धोऽपि तातः पुत्रैषणातुरः ।
शोकमुत्सृज्य मत्प्राणपोषणे यत्नमग्रहीत् ॥ ६४ ॥
न शशाक क्वचिद्गन्तुमात्मनः प्राणवृत्तये ।
मां वक्षसि निधायास्त नीड एव दिवानिशम् ॥ ६५ ॥
अन्यपञ्जरथानीतभुक्तोज्झितफलादिना ।
मदाप्यायनशिष्टेन सोऽकरोद्वृत्तिमात्मनः ॥ ६६ ॥
अतिक्रामति कालेऽथ किंचिदुद्भिन्नपक्षतौ ।
तातवक्षःस्थलस्थेऽपि मय्युड्डयनलालसे ॥ ६७ ॥
अकस्मादेव संभ्रान्तमृगपक्षिकुलश्रुतः ।
अभूत्कलकलस्तस्मिन्नरण्ये यमदुन्दुभिः ॥ ६८ ॥ (युग्मम्)
ततस्तातोरसः किंचिदुन्नमय्य शिरोधराम् ।
कुतूहलवशाच्चक्षुर्दिक्षु निक्षिप्तवानहम् ॥ ६९ ॥
अथापश्यमसंख्यातकिरातपरिवारितम् ।
वने शबरसेनान्यमायान्तं मृगयारसात् ॥ ७० ॥
ततो मृतमिवात्मानमुत्खातमिव शाल्मलिम् ।
परिवृत्तमिवारण्यं भयेनाहमचिन्तयम् ॥ ७१ ॥

---

१. 'अमितो गत्वा' ख. २. 'कृत्वागत्य' ख. ३. 'एकतनयोतयोः' ख. ४. 'विरह' ख. ५. 'पिता' ख. ६. 'फलाम्बुना' क. ७. 'विक्षिप्तवान्' ख. ८. 'परिवारिते' ख. ९. 'शल्मलिम्' क. १०. 'अकल्पयम्' ख.

हतप्राणिसहस्राङ्गस्रवद्रुधिरचर्चितैः ।
मुहूर्तादेव तद्व्याधैर्[1][2]तथारण्यमपूर्यत ॥ ७२ ॥
सेनापतिः स[3] निस्त्रिंशो मृगयाजनितश्रमः ।
निषसाद त[4]तः पम्पासरसस्तीरशा[5]द्वले ॥ ७३ ॥
क्षणं विश्रम्य पीत्वापः प्राश्य वालमृणालिकाः ।
पुलिन्दैः सह सेनानीः स जगाम यथागतम् ॥ ७४ ॥
एको जरत्पुलिन्दस्तु पापस्तत्र [6]व्यलम्बत ।
प्रांशुर्भयंकराकारः कृतान्तस्येव किंकरः ॥ ७५ ॥
अजातपिशितप्राप्तिरनुभूतवृथाश्रमः ।
यमदूतीमिव दृशं स ददौ तत्र शाल्मलौ ॥ ७६ ॥
स दुरारोहतां तस्य जानन्नपि महातरोः ।
जातानध्यवसायोऽपि यत्नमारोहणेऽकरोत् ॥ ७७ ॥
[7]अथाहमसमत्रासविपर्यासितमानसः ।
अविशं पितुरुत्सङ्गं तत्प[8]क्षावृतविग्रहः ॥ ७८ ॥
स तु पापस्तमारुह्य तरुं नीडनिवासिनः ।
हत्वाहत्वा यथाशक्ति शुकान्भूमावपातयत् ॥ ७९ ॥
क्रमेण स दुराचारस्तातस्यापि शिरोधराम् ।
बभञ्ज तं च[9] चिक्षेप क्षितौ विगतजीवितम् ॥ ८० ॥
तदा मम न तच्छोको नान्यत्कि[10]ंचिच्च चेतसि ।
केवलं सहजातेन भयेनैवास्मि विप्लुतः ॥ ८१ ॥
ततोऽहं पितुरुत्सङ्गाद्विनिर्गत्य ससाध्वसम् ।
अन्तरं तरुशीर्णानां पर्णानां तूर्णमाविशम् ॥ ८२ ॥
पापः सोऽप्यवरुह्याथ शाल्मलेर्मूलवर्तिनः ।
शुकान्गतासूनादाय व्याधाननुसरन्नगात् ॥ ८३ ॥

---

१. 'सहस्रौघैः' ख. २. 'तदरण्य' ख. ३. 'तु' क. ४. 'मुहुः' क. ५. 'शाड्वले' ख. ६. 'विलम्बितः' ख. ७. 'ततोऽहं' ख. ८. 'पक्षावित–' ख. ९. 'तु' ख. १०. 'किंचन' ख.

अहं विधिनियोगात्तु तेन दुष्कृतकारिणा ।
जीर्णपर्णसवर्णत्वात्तदानीं नावधारितः ॥ ८४ ॥
ततो दूरमतिक्रान्ते तस्मिन्दारुणकर्मणि ।
संजातजीविताशं मां पिपासा पर्यबाधत ॥ ८५ ॥
अनुड्डयनसामर्थ्यात्पद्भ्यामेव यथातथा ।
पम्पापुलिनपर्यन्तं गन्तुमैच्छं पिपासितः ॥ ८६ ॥
तथाप्यतिनिरुत्साहः पतन्मुहुरितस्ततः ।
तमेव पापकर्माणं शङ्कमानः पदे पदे ॥ ८७ ॥
चिरं हा तात तातेति शोचन्कण्ठान्तवर्तिभिः ।
प्राणैरायास्यमानोऽहमतिष्ठमतिनिष्ठुरः ॥ ८८ ॥ (युग्मम्)
तस्मादनतिदूरेऽस्ति सरसस्तपसां निधेः ।
निर्धूतक्लेशजालस्य जाबालेराश्रमो मुनेः ॥ ८९ ॥
ततस्तस्मिन्सुतस्तस्य सरसि स्नातुमागतः ।
हारीतनामा मां तत्र तदवस्थं व्यलोकयत् ॥ ९० ॥
कष्टं केनापि पापेन पातितः शुकशावकः ।
कुलायात्क्राम्यतीत्युक्त्वा कृपया मां करेऽग्रहीत् ॥ ९१ ॥
अपाययत्पयोबिन्दून्मरुताश्वासयन्मुहुः ।
कृताह्निकश्च कारुण्यादनयत्पितुराश्रमम् ॥ ९२ ॥
समाश्वस्तस्य हारीततातं दृष्ट्वैव पश्यतः ।
पदं स्थिरमिव न्यस्तं हृदि मे जीविताशया ॥ ९३ ॥
नीडच्युतोऽयमानीतो मया विहगपोतकः ।
इति पित्रे प्रणम्यासौ पाणिस्थं मामदर्शयत् ॥ ९४ ॥
अथ जाबालिमद्राक्षं साक्षादिव पितामहम् ।
महात्मभिः परिवृतं सानुकम्पैस्तपोधनैः ॥ ९५ ॥

१. 'कर्मणा' ख. २. 'तथा पथि' ख. ३. 'मुकुलितेक्षणः' ख. ४. 'कण्ठाग्र-' ख. ५. 'अथ' ख. ६. 'ततस्तस्य सुतस्तस्मिन्' ख. ७. 'एवं' ख. ८. 'आदौ' क. ९. 'अवीदृश्यत्' क.

जराधवलमूर्धानं धाम्ना प्रसरता बहिः ।
अनतिस्फुटसंलक्ष्यशरीरावयवाकृतिम् ॥ ९६ ॥ (युग्मम्)
स तु मां क्षणमुद्वीक्ष्य स्मयमान इवावदत् ।
इदं हि भुज्यतेऽनेन फलं स्वस्यैव कर्मणः ॥ ९७ ॥
त्रिकालदर्शी भगवान्स हि दिव्येन चक्षुषा ।
विश्वं पश्यति [1]पाणिस्थबदरामलकादिवत् ॥ ९८ ॥
वचस्तदाकर्ण्य कुतूहलाकुलाः समेत्य सर्वे मुनयस्तमब्रुवन् ।
बभूव कोऽयं भगवन्भवान्तरे [2]किमस्य वा दुश्चरितं तदुच्यताम् ॥९९॥
[3]अभ्यर्थितो मुनिभिरित्युपरुध्यमान-
स्तानब्रवीत्कुरुत तावदहः क्रियाः स्वाः ।
सांध्यं विधाय विधिमस्खलितावधान-
माकर्णयिष्यथ कथां पृथुमेतदीयाम् ॥ १०० ॥
उक्तास्[4]तथा भगवता मुनयो निजेन
कर्मक्रमेण दिवसं गमयांबभूवुः ।
हारीतहस्तविहितैश्[5]च मनोविनोदै-
स्तैस्तैरनीयत मयापि दिनावशेषः ॥ १०१ ॥

इति [6]श्रीविपश्चिद्वराग्रगण्याचार्यभट्टश्रीजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

अथ सं[7]ध्यासमाध्यन्ताः समाप्य मुनयः क्रियाः ।
शुश्रूषवः समागम्य [8]यथास्थानमुपाविशन् ॥ १ ॥
अहमप्यात्मवृत्तान्तविस्तरश्रवणोत्सुकः ।
संहृत्य चापलं सर्वमासं स्थिरमनास्तदा ॥ २ ॥

---

१. 'पाणिस्थं करस्थामलं यथा' ख. २. 'किमद्य यत्' क. ३. 'अभ्यर्चितो मुनिभिरित्यनुवध्यमानः' ख. ४. 'च ते' क. ५. 'निहतेन' ख. ६. 'इति श्रीविपश्चिद्वराग्रगण्याचार्य' इति ख-पुस्तके नास्ति. ७. 'सांध्याः' ख. ८. 'यथास्थलम्' ख.

अथ दुग्धाब्धिकल्लोलधवलैरमृतञ्चितैः ।
सिञ्चन्निव करैरिन्दुरुदगादाश्रमस्थलीम्[1] ॥ ३ ॥
भगवानथ[2] जाबालिः सुखासीनः स्वविष्टरे ।
वल्कलाहितपर्यङ्कबन्धो वक्तुं प्रचक्रमे ॥ ४ ॥
सर्वे दत्तावधानाः स्थ शृणुतेमां तपोधनाः ।
अमुष्य पूर्ववृत्तान्तप्रस्तावोप[3]नतां कथाम् ॥ ५ ॥
अस्त्यवन्तिषु संसारसलक्ष्म्याः प्रसवभूरिव ।
निधिरुज्जयिनी नाम नगरी गुणसंपदाम् ॥ ६ ॥
लङ्कालकामरावत्यो येषां वसतयः प्रियाः ।
तेऽपि याममभिपश्यन्तः सुखं तासु न शेरते ॥ ७ ॥
किम[4]न्यद्यत्र कैलासनिवासप्रीतिमुज्झता ।
महाकालाभिधानेन रुद्रेण स्वयमास्यते ॥ ८ ॥ (तिलकम्[5])
त[6]स्यां भरतमांधातृभगीरथपृथूपमः ।
तारापीड इति श्रीमान्ब[7]भूव पृथिवीपतिः ॥ ९ ॥
परस्परविरोधेन विप्रकीर्णैरितस्ततः ।
विस्रब्धमास्यते यत्र संभूय स[8]कलैर्गुणैः ॥ १० ॥ (युग्मम्)
विहसन्बुद्धिविभवैर्भृगूद्वहबृ[9]हस्पती ।
अमात्य शुकनासाख्यो ब्राह्मणस्तस्य चाभवत् ॥ ११ ॥
त्रिविक्रमपदाक्रम्य स राजा पृथिवीमिमाम् ।
तस्मिन्मन्त्रिणि तद्भारं निचिक्षेप भरक्षमे ॥ १२ ॥
तथा च[10] पालयामास स मन्त्री सकलाः प्रजाः ।
यथा त्रिविधमप्येता न दुःखं किंचि[11]दस्पृशत् ॥ १३ ॥
यथा यथा च लोकोऽस्मिन्पितरी[12]वान्वरज्यत ।
राजा तथा तथात्मानं कृतकृत्यममन्यत ॥ १४ ॥

---

१. 'स्थलीः' ख. २. 'अपि' क. ३. 'उपचितां' ख. ४. 'यस्यां किमन्यत्कैलास-निवासरसमुज्झता' ख. ५. ख-पुस्तके नास्ति. ६. 'यस्यां' ख. ७. 'उवास' क. ८. 'कुशलैः' ख. ९. 'बृहस्पतीन्' ख. १०. 'एव' क. ११. 'अस्पृशन्' ख. १२. अ-नुरंज्यते' ख.

अक्लेशमर्[1]पितं तेन स्वभुजे जगद[2]र्जनम् ।
संभोगविघ्नकारीति पालनं मन्त्रिसात्कृतम् ॥ १५ ॥
कृतकृत्यतया चासौ कार्यशेषमचिन्तयन् ।
विषयेष्वाहितप्रीतिरासांचक्रे यथासुखम् ॥ १६ ॥
शोभा हि कृतकृत्यस्य राज्ञो भोगविभूतयः ।
असमाप्तजिगीषस्य ता एव तु विडम्बनाः ॥ १७ ॥
स युवा मधुराकारस्तरुणीनयनोत्सवः ।
[3]कलासु कुशलः कामी बुभुजे भोगसंपदः ॥ १८ ॥
न ते भोगा[4] न ताः क्रीडा न ता गोष्ठ्यो न ते रसाः ।
न ते विलासा ये[5]ष्वस्य पारगं नाभवन्मनः ॥ १९ ॥
समग्रसुखसंभोगभूमिज्ञोऽपि स[6] भूपतिः ।
सुखमेकं तु नाज्ञासीदपत्यालोकनोद्भवम् ॥ २० ॥
यथा यथास्य कालेन व्यतीयाय नवं वयः ।
निर[7]पत्यतया शोको वर्धते स्म तथा तथा ॥ २१ ॥
मुख्यभूता च सर्वस्मिन्नन्तःपुरकदम्बके ।
राज्ञी विलासवत्याख्या त[8]स्य प्राणसमाभवत् ॥ २२ ॥
सा राजमहिषी गौरीमभ्यर्चयितुमेकदा ।
देवतायतनं बाह्यं ययौ भर्तुरनुज्ञया ॥ २३ ॥
पुराणे वाच्यमानेऽर्थे[9] प्रसङ्गपतितां श्रुतिम् ।
अपुत्रस्य कुतो लोका इति शुश्राव तत्र सा ॥ २४ ॥
प्रतप्तलोहसूचीव सा श्रुतिः श्रवणान्तरम् ।
विवेश द[10]दती तस्याः परां कामपि वेदनाम् ॥ २५ ॥
ततः प्रतिनिवृत्ताथ प्रविश्य भवनं निजम् ।
वस्त्रावृतमुखी भूमावुपविश्य रुरोद सा ॥ २६ ॥

---

१. 'आर्जितं' ख. २. 'अर्थनम्' ख. ३. 'यथाभिलाषिताः' क. ४. 'भावा' ख. ५. 'यत्रास्य' ख. ६. 'महीपतिः' क. ७. 'अनपत्यतया' ख. ८. 'यस्य' ख. ९. 'तु प्रसङ्गात्' ख. १०. 'दधती' क.

सखीभिः प्रार्थ्यमानापि न स्वामभजत स्थितिम् ।
नो[1]दुःखात्कर्तुमाहारं विरराम न रोदनात् ॥ २७ ॥
अथोपलभ्य त[2]त्पीडावार्तां परिजनान्नृपः ।
प्रविश्यान्तःपुरं प्राह स्वैरमेनां प्रसादयन् ॥ २८ ॥
प्रिये किमिदमारब्धं रुद्यते किमकारणम् ।
न त्वया म[3]त्कृते मन्युरनुभूतः कदाचन ॥ २९ ॥
अन्योऽपि [4]मन्मुखप्रेक्षी मदधीनात्मजीवितः ।
कस्तवोत्पादयेन्मन्युं यस्मै कुप्यसि सुन्दरि ॥ ३० ॥
इति प्रसाद्यमाना सा यदा नोवाच किंचन ।
तदा विदितवृत्तान्तस्तत्सख्या [5]नृपतिः कृतः ॥ ३१ ॥
तेन व्यतिकरेणाथ सोऽपि शो[6]कपरायणः ।
रुरोद वक्षसि न्यस्तसबाष्पदयितामुखः ॥ ३२ ॥
चिरं रुदित्वा निःशब्दं स्वयमुन्मृज्य लोचने ।
जगाद गद्गदं राजा महिषीमुपसान्त्वयन् ॥ ३३ ॥
ममापि नन्वियं देवि चिरात्प्रभृति दुःसहा ।
दुनोति हृदयं चि[7]न्ता निष्प्रतीकाररोगवत् ॥ ३४ ॥
विफलं बत मे राज्यं विफला मम सं[8]पदः ।
विफला मम संभोगा विफलं मम जीवितम् ॥ ३५ ॥
कुतोऽस्माकम[9]भव्यानामियत्यो भाग्यसंपदः ।
यद्द्रक्ष्यामस्तवोत्सङ्गं बालकापत्यमण्डितम् ॥ ३६ ॥
वाञ्छन्क्रीडनकं किंचित्क[10]दा मे पापकर्मणः ।
आकृष्यति सुतः कूर्चं किमप्यव्यक्तमालपन् ॥ ३७ ॥
इत्यादि विलपत्यस्मिन्बाष्पाकुलितलोचने ।
शुकनास इमां [11]वार्तां श्रुत्वा सत्वरमाययौ ॥ ३८ ॥

---

१. 'नो दुःखात्' ख. २. 'तच्चित्तपीडां' क. ३. 'मत्कृतो' ख. ४. 'मत्सुखापेक्षी' ख. ५. 'भूपतिः' क. ६. 'दुःख–' ख. ७. 'पीडा' ख. ८. 'देवताः' ख. ९. 'अभाग्यानां' ख. १०. ख-पुस्तके द्वितीयचतुर्थचरणयोर्व्यत्ययः. ११. 'ज्ञात्वा वार्तां' ख.

निरपत्यः कृतः सोऽपि राजेव हतवेधसा ।
तस्याप्यनेन शोकेन गृहे रोदिति गेहिनी ॥ ३९ ॥
स तु स्वामिगतं दुःखं दुःखमित्यवधारयन् ।
तद्दुःखापनयोपायप्रवणो धीरम[1]भ्यधात् ॥ ४० ॥
क्व धीरप्रकृतिर्देवः केयं विक्लवचित्तता ।
शोकोऽवकाशं लभते हृदये न भवादृशाम् ॥ ४१ ॥
[2]यदि हि स्त्रीस्वभावेन देवी विक्लवतां गता ।
तत्किं प्रलम्बकूर्चस्य युक्तं देवस्य रोदितुम् ॥ ४२ ॥
कोऽयं हिताहितप्राप्तिपारिहारक्रियाक्रमः ।
यत्कपोलतलन्यस्तहस्तं निःश्वस्यते चिरम् ॥ ४३ ॥
यदि [3]दुःखासिका सत्यमनपत्यतया तव ।
बुद्धिराधीयतां धर्मे धर्मात्सर्वमवाप्यते ॥ ४४ ॥
दीयतां वसु विप्रेभ्यः पूज्यन्तां सर्वदेवताः ।
प्रवर्त्यन्तां प्रपारामाः खन्यन्तां सलिलाशयाः ॥ ४५ ॥
[4]नास्तिनाम जगत्यस्मिन्पुरुषार्थः स कश्चन ।
यो धर्मनिरतैर्धी[5]रैस्त्वादृशैर्नाधिगम्यते ॥ ४६ ॥
इत्यादि शुकनासोक्तमाकर्ण्य विगतज्वरौ ।
उत्थाय स्वस्थवत्सर्वा दंपती चक्रतुः क्रियाः ॥ ४७ ॥
ततः प्रभृति दानानि यागहोमतपांसि [6]तौ ।
चि[7]त्राण्यकुरुतां सर्वा व्यसयन्त [8]ततः प्रजाः ॥ ४८ ॥
कदाचिदथ भूपालः स्वप्नेऽपश्यन्निशाकरम् ।
विलासवत्या वदनं प्रविशन्तमखण्डितम् ॥ ४९ ॥
तथा मनोरमा नाम शुकनासस्य गेहिनी ।
स्वप्ने सपुण्डरीकाङ्का सापि तेन व्यलोक्यत ॥ ५० ॥

---

१. 'अब्रवीत्' ख. २. 'यदीह' ख. ३. 'दुःखस्थितिः' ख. ४. 'अस्ति' क.
५. 'वीरैः' क. ६. 'च' क. ७. 'चक्रतुस्तु विचित्राणि' क. ८. 'यतः' क.

अन्येद्युरुदये भानोर्मङ्गलाचारपूर्वकम् ।
तं स्वप्नं कथयामास[1] शुकनासाय भूपतिः ॥ ५१ ॥
सानन्दं सोऽभ्यधादेनं संपन्नास्ते[2] मनोरथाः ।
अचिरात्सोष्यते देवी पुत्रं पूर्णेन्दुसुन्दरम् ॥ ५२ ॥
दिनेष्वथ व्यतीतेषु केषुचिद्गर्भमग्रहीत् ।
महिषी तत्सखीभ्यश्च तमज्ञासीन्नरेश्वरः ॥ ५३ ॥
ताभ्यः प्रादात्स वासांसि चित्राण्याभरणानि च ।
क्रमेण गर्भलिङ्गेषु व्यक्तेषु मुमुदेतराम् ॥ ५४ ॥
शुकनासाय चोवाच प्रहर्षोत्फुल्ललोचनः ।
चकाङ्क्ष चातको मेघानिव प्रसववासरान् ॥ ५५ ॥
[3]संपूर्णे दशमे मासि देवी सुतमसूत सा ।
हर्षेण च जगत्सर्वं परिवृत्तमिवाभवत् ॥ ५६ ॥
राजा महोत्सवानन्दपूर्णपात्रमुपाहृतम्[4] ।
दृष्ट्वा लोकेषु माति स्म न त्रि[5]विक्रमवत्त्रिपु ॥ ५७ ॥
शुकनासस्तु राजानं कण्ठे जग्राह निर्भरम्[6] ।
औत्सुक्यात्सूतिकावासं तावुभावपि जग्मतुः ॥ ५८ ॥
ततो ददृशतुर्व्यक्त[7]सकलाङ्गं कुमारकम् ।
इन्दोरुदयरागार्द्रं नवं बिम्बमिवोदितम् ॥ ५९ ॥
शुकनासो निरूप्याङ्गमेकैकं निपुणं शिशोः ।
हस्ते भूपालमालम्ब्य हर्षगर्भमभाषत ॥ ६० ॥
अयं शङ्ख इदं चक्रमियमूर्णेदमम्बुजम् ।
पश्य[8] बालस्य चिह्नानि दृश्यन्ते चक्रवर्तिनाम् ॥ ६१ ॥
योऽसौ स्वप्ने त्वया दृष्टश्चन्द्रो देवीमुखं[9] विशन् ।
स एवायमिहोत्पन्न इति मा संशयं कृथाः ॥ ६२ ॥

१. 'वर्णयामास' क. २. 'संपूर्णाः' ख. ३. 'प्राप्तेऽथ दशमे मासे' ख. ४. 'उदाहृतम्' ख. ५. 'त्रिविक्रमवर्तिषु' क-ख. ६. 'निर्दयम्' क. ७. 'व्यक्तं' क. ८. 'यस्य' ख. ९. 'मुखे' ख.

इति तद्दर्शनानन्दसुधाप्लावितयोस्तयोः ।
[1]शुकनासस्य राज्ञश्च हर्षाब्धिर्ववृधेतराम् ॥ ६३ ॥
[2]अत्रान्तरे मन्त्रिगृहादागत्य द्वाररक्षकः ।
शुकनासगृहे पुत्रजन्मोत्सवमचीकथत् ॥ ६४ ॥
शुकनासम[3]थाभीक्ष्णमालिलिङ्ग महीपतिः ।
उत्तरीयं जहारास्य पूर्णपात्रमिति स्वयम् ॥ ६५ ॥
उवाच चैनं पश्येदं सुखस्योपरि नः सुखम् ।
इमे ते पतिताः सत्यं तुहिने सोमरश्मयः ॥ ६६ ॥
साध्विदं वेधसारब्धं चिं[4]तानुगुणमावयोः ।
सहैव पात्रतां नीतौ यदावां सुखदुःखयोः ॥ ६७ ॥
ततस्तूर्यरवैर्नृत्यैश्चर्चरीतालनिःस्वनैः ।
सिन्दूरघनसारादिक्षोदैः कुङ्कुमकर्दमैः ॥ ६८ ॥
अनपेक्षितनीचोच्चव्यवहारनिरर्गला ।
केलिः प्रववृते तत्र राजगेहमहोत्सवे ॥ ६९ ॥ (युग्मम्)
राजा तु स्वगृहे केलिविमर्दं वीक्ष्य तादृशम् ।
शुकनासगृहं गत्वा द्विगुणं तमकारयत् ॥ ७० ॥
कृतेऽथ जातकर्मादौ वृत्ते षष्ठीप्रजागरे ।
विलासवत्यां स्नातायां शुचौ काल उपस्थिते ॥ ७१ ॥
प्रशस्तेऽहनि दैवज्ञैरनुज्ञातो महीपतिः ।
स्नातः [6]सुवर्णलक्षेण पूजयित्वा द्विजोत्तमान् ॥ ७२ ॥
स भूषणानि वासांसि वर्षन्परिजने शिशोः ।
चन्द्रापीड इति स्वप्नसदृशं नाम निर्ममे ॥ ७३ ॥ (तिलकम्)
शुकनासोऽपि संपूज्य विप्रान्विप्रजनोचितम् ।
वैशम्पायन इत्यात्मसूनोर्नाम [7]प्रणीतवान् ॥ ७४ ॥

१. 'शुकनासगृहाद्वृद्धा तत्पुत्रोत्पत्तिमभ्यधात्' क. २. अयं श्लोकः क-पुस्तके नास्ति. ३. 'अथोदारं' ख. ४. 'चिन्ता-' ख. ५. 'नित्यं' ख. ६. 'सुवर्णं स ददौ' ख. ७. 'प्रशास्तिवान्' ख.

क्रमेण वर्धमानोऽथ कृतचूडादिमङ्गलः ।
चन्द्रापीडोऽभवत्पित्रोः परमुत्सङ्गमण्डनम् ॥ ७५ ॥
आकारेणेन्दुकान्तेन[1] मधुरैर्बालवल्गितैः ।
अव्यक्तवर्णैरालापैरहरत्स[2] तयोर्मनः ॥ ७६ ॥
प्राप्तेऽथ सप्तमे वर्षे विद्यागृहमकारयत् ।
चन्द्रापीडस्य नगराद्बहिर्बहुगुणं नृपः ॥ ७७ ॥
कृतोपनयनं चैनं काले क्षत्रजनोचिते ।
तत्र न्यवेशयद्राजा विद्याधिगमसिद्धये ॥ ७८ ॥
तर्कव्याकरणाभिज्ञान्धनुर्वेदविशारदान् ।
दण्डनीत्यादिनिपुणानाचार्यान्पर्यकल्पयत् ॥ ७९ ॥
शुकनासोऽपि तं पुत्रमुपनीय यथाविधि ।
राजपुत्रानुगं चक्रे विद्यागृहनिवासिनम् ॥ ८० ॥
नृपतिस्त्वगमद्द्रष्टुं पुत्रं गुरुकुले[3] स्थितम् ।
प्रार्थितोऽपि[4] स तन्मात्रा नैनमानाययद्गृहम् ॥ ८१ ॥
पूर्णषोडशवर्षोऽथ[5] राजपुत्रः कुशाग्रधीः ।
सकृदध्यापितो विद्याः पूर्वाभ्यस्ता इवाग्रहीत् ॥ ८२ ॥
सर्वशास्त्रार्थतत्त्वज्ञः सर्वभाषासु सत्कवीः ।
सर्ववादेषु[6] वक्ताभूत्सर्वशास्त्रेषु कोविदः ॥ ८३ ॥
प्रौढः कलासु सर्वासु दक्षः सर्वेषु कर्मसु ।
सर्वेषु[7] व्यवहारेषु सोऽभूदस्खलितक्रमः ॥ ८४ ॥
क्रमेण वर्धमानश्च स व्यायाममसेवत ।
शुशुभे च[8] तदभ्यासप्राप्तसर्वाङ्गसौष्ठवः ॥ ८५ ॥
प्रलम्बबाहुः पीनांसः पृथुवक्षास्तनूदरः ।
गम्भीरवाहुर्वृत्तोरुस्तरुणः करिसद्गतिः ॥ ८६ ॥

---

१. 'इन्दुतुल्येन' ख. २. 'आहरत्' क. ३. 'गुरुगृहे' ख. ४. 'स प्रार्थितोऽपि' क. ५. 'तु' ख. ६. 'वादिषु' ख. ७. 'सर्वसंव्यवहारेषु' ख. ८. 'स' क.

शुकनाससुतस्तस्य प्रति[1]बिम्ब इवाभवत्।
गुणैरशेषैरन्यत्र शरीरप्राणगौरवात्॥ ८७॥
राजा तु तं सुतं बुद्ध्वा कृतार्थं गुरुवेश्मनः।
शुकनासगिरा गेहमानेतुमुपचक्रमे॥ ८८॥
स बलाहकनामानमाहूय ध्वजिनीपतिम्।
पुण्येह्नि प्राहिणोत्पुत्रमानेतुं कृतमङ्गलः॥ ८९॥
सहस्रं राजपुत्राणां विनीतं बाहुशालिनाम्।
वि[2]ससर्ज च तेनैव सह पु[3]त्रानुवर्तिनम्॥ ९०॥
तथेन्द्रायुधनामानं प्रेषयामास वाजिनम्।
जितोच्चैःश्रवसं तैस्तैरनन्यस[4]दृशैर्गुणैः॥ ९१॥
बलाहकस्ततो गत्वा विद्यागृहनि[5]वासिनम्।
अद्राक्षीद्राजपुत्रं तं प्रणनाम च सादरम्॥ ९२॥
आचचक्षे च राजाज्ञां गृहमागम्यतामिति।
सनामग्रहणं [6]चास्मै राजपुत्रान्न्यवेदयत्॥ ९३॥
ततो बलाहकाख्यातशौर्यादिगुणगौरवाः।
राजपुत्राः प्रणेमुस्तं पु[7]रंदरमिवामराः॥ ९४॥
पर्याणरत्नज्योतिर्भिर्जनितेन्द्रायुधप्रभम्।
इन्द्रायुधं प्रवेश्या[8]श्वं पुनराह बलाहकः॥ ९५॥
इममारोह सिन्धूत्थमश्वरत्नमयोनिजम्।
पारसीकाधिपतिना देवस्योपायनीकृतम्॥ ९६॥
चन्द्रापीडस्तु तं दृ[9]ष्ट्वा तुरंगममनुत्तमम्।
परं विस्मयमापेदे चिरं चै[10]वंमचिन्तयत्॥ ९७॥
हृदयं मे ब्रवीत्येवं[11] नैष सत्यं तुरंगमः।
कोऽपि केनापि शा[12]पेन नूनं तुरगतां गतः॥ ९८॥

---

१. 'प्रतिबिम्बं' क. २. 'व्यसर्जयच्च' ख. ३. 'पुत्रस्य सेवकम्' क. ४. 'सुलभैः' ख. ५. 'कृतास्पदम्' ख. ६. 'चासौ' ख. ७. 'पुरुहूतं' ख. ८. 'अथ' ख. ९. 'वीक्ष्य' ख. १० 'चैव व्यचिन्तयन्' ख. ११. 'इति' ख. १२. 'पापेन' ख.

अयोनिजत्ववार्तेयमे[1]तत्संकल्पसाक्षिणी ।
रम्भा किलाप्सरःकन्याशापेन वडवाभवत् ॥ ९९ ॥
गरुत्मतीदमु[2]च्चत्वमुच्चैःश्रवसि वा भवेत् ।
तेजसामा[3]कृतेर्वापि न सामान्येषु वाजिषु ॥ १०० ॥
इति बु[4]द्ध्या विकल्प्याथ बलाहकसमर्पितैः ।
कुसुमस्रगलंकारदुकूलैः कृतम[5]ण्डनः ॥ १०१ ॥
गुरूनामन्त्र्य दत्ताशीर्ब्राह्मणैर्वन्दिभिः स्तुतः ।
वैशम्पायनमारूढमालोक्य तुरगान्तरम् ॥ १०२ ॥
योऽसि सोऽसि नमस्तुभ्यमारोहातिक्रमस्त्वया ।
मर्षणीयोऽयमस्माकमारुरोहेति तं वदन् ॥ १०३ ॥ (तिलकम्)
स इन्द्रायुधमारुह्य वैनतेयमिवाच्युतः ।
अपि त्रिजगतीं कृत्स्नां मेने हस्तगतामिव ॥ १०४ ॥
सवैशम्पायनः सोऽथ निर्गत्य भवनात्ततः ।
राजपुत्रैः परिवृतो विवेश नगरीं श[6]नैः ॥ १०५ ॥
तमथ पुरतरुण्यो राजमार्गेण यान्तं
दद्दशुरतुलकान्तिं सौधवातायनस्थाः ।
व्यपगतगुरुलज्जाः संभ्रमोत्कम्पिताङ्ग्यः
स्मरजनितविकारैर्लोचनैरर्चयन्त्यः ॥ १०६ ॥

इति श्रीविपश्चिद्राग्रगण्याचार्यभट्टश्रीजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

स प्राप्य नृपतिद्वारमवतीर्य तुरंगमात् ।
राजधानीं ससेनानीः सवैशम्पायनोऽविशत् ॥ १ ॥
प्रविश्य च सभामध्ये हर्षबाष्पार्द्रचक्षुषः ।
न्यस्तजानुः क्षितौ मूर्ध्ना ववन्दे चरणौ पितुः ॥ २ ॥

---

१. 'एतदुक्ताथ' ख. २. 'उच्चैस्त्वं' ख. ३. 'आकृतिः' ख. ४. 'बुद्ध्यानुसंधाय' क. ५. 'मङ्गलः' ख. ६. 'ततः' ख.

आलिलिङ्ग च[1] तं राजा चुचुम्ब शिरसि क्षणात्[2] ।
ग्रहीतुमैच्छदुत्सङ्गे स तु भूमावुपाविशत् ॥ ३ ॥
द्रष्टुं पुनःपुनः स्प्रष्टुमतृप्तेनापि[3] भूभुजा ।
विसृष्टोऽथ क्षणं[4] स्थित्वा मातरं वन्दितुं ययौ ॥ ४ ॥
तां सुतालोकनानन्दक्षरत्क्षीरपयोधराम् ।
प्रणम्य जननीः सर्वा नन्दयामास वन्दनैः ॥ ५ ॥
अभिनन्द्य कृतं ताभिरवतारणमङ्गलम् ।
शुकनासमथ द्रष्टुमयासीत्तस्य मन्दिरम् ॥ ६ ॥
द्वारि वाजिनमुत्सृज्य प्रविश्य प्रश्रयेण तम् ।
पितृवत्प्रणनामासौ मौलिना मेदिनीं स्पृशन् ॥ ७ ॥
नमन्तमेनमुत्थाप्य स्वयमुत्थाय सादरम् ।
शुकनासस्तु जग्राह कण्ठे पुलकिताननः ॥ ८ ॥
कृतयत्नोऽपि नाध्यास्त चारुचामीकरासनम् ।
चन्द्रापीडः क्षितावेव तस्य न्यविशताग्रतः ॥ ९ ॥
शुकनासं च मुञ्चन्तमासनं स्वं न्यवारयत् ।
तत्र क्षणमिव स्थित्वा द्रष्टुमागान्[6]मनोरमाम् ॥ १० ॥
सप्रश्रयं प्रणम्याथ तां विलासवतीमिव ।
ततोऽवाप्तविचित्राशीर्मङ्गलो निरियाय सः ॥ ११ ॥
यादृक्च[7] चन्द्रापीडस्य दर्शनालिङ्गनक्रमः ।
स वैशम्पायनस्यापि तादृगेव गृहद्वये ॥ १२ ॥
न कश्चन सुतस्नेहे विशेषश्च तयोरभूत् ।
मन्त्रिणो राजपुत्रे वा मन्त्रिपुत्रे नृपस्य वा ॥ १३ ॥
सर्वोपकरणोपेतं पित्रा पूर्वं प्रकल्पितम् ।
जगाम चन्द्रापीडोऽथ कुमारभवनं महत् ॥ १४ ॥

---

१. 'सुतं' ख. २. 'क्षणम्' ख. ३. 'प्रष्टुं' ख. ४. 'मुहुः' ख. ५. 'आदौ' क.
६. 'प्रागात्' ख. ७. 'चन्द्रापीडस्य यादृक्षो' ख.

[1]सुसंनिवेशमालोक्य [2]रेमे तत्र चिराय सः ।
स्थितिमिन्द्रायुधस्यापि स्ववासे पर्यकल्पयत् ॥ १५ ॥
[3]ततः स्नातानुलिप्ताङ्गं कृताहारं सुखस्थितम् ।
मात्रा विसृष्ट [4]आगत्य कञ्चुकी तमभाषत ॥ १६ ॥
इयं हि पत्रलेखाख्या [5]कुलूतेश्वरकन्यका ।
केनापि दैवयोगेन परिभ्रष्टा पितुर्गृहात् ॥ १७ ॥
बालैव वर्धिता देव्या स्वयमन्तःपुरे निजे ।
योग्या सकलविस्रम्भभूमिस्ते पार्श्ववर्तिनी ॥ १८ ॥
मत्वेति देव्या प्रहिता कुमार प्रतिगृह्यताम् ।
इत्युक्त्वोपाहरत्कन्यां विनीतां प्रियदर्शनाम् ॥१९॥ (तिलकम्)
सा तु तेनार्पिता कन्या ततः प्रभृति तं तथा ।
असेवत यथा [6]चास्य निजं[7] चित्तमिवाभवत् ॥ २० ॥
चकार तां च ताम्बूल[8]करङ्कस्याधिकारिणीम् ।
तुतोष च गुणैरस्याः शीलाचारनयादिभिः ॥ २१ ॥
कियत्स्वपि व्यतीतेषु दिवसेष्वथ पार्थिवः ।
यौवराज्यविधौ सूनोरभियोगमशिश्रियत् ॥ २२ ॥
संमन्त्र्य शुकनासेन सह विस्रम्भनिर्भरम् ।
[9]संभारसंग्रहारम्भमकरोत्कृतमङ्गलः ॥ २३ ॥
संनिकृष्टाभिषेकं च दर्शनार्थमुपागतम् ।
चन्द्रापीडमथोवाच शुकनासः सविस्तरम् ॥ २४ ॥
तात विज्ञातशास्त्रस्य विनयाचारशा[10]लिनः ।
नाल्पमप्युपदेष्टव्यमस्ति स्थिरमतेस्तव ॥ २५ ॥
किं तु लोकोत्तरा लक्ष्मीरभिराममिदं वपुः ।
नवं वयः परा शक्तिरिति दुर्विषहो भरः ॥ २६ ॥

---

१. 'स्वसंनिवेशं' ख. २. 'तत्र रेमे' ख. ३. 'तत्र स्नात्वा' ख. ४. 'चागत्य' ख. ५. 'काम्बोजेश्वर–' ख. ६. 'सास्य' क. ७. 'चिरं' ख. ८. 'करण्डस्य' ख. ९. 'संविधानं' ख. १०. 'शीलिनः' क.

लक्ष्मीर्नाम [1]परं पुंसामन्यथाभावकारणम् ।
विरलास्ते विकाराय न येषां तत्परिग्रहः ॥ २७ ॥

पुष्णाति तीव्रमूष्माणं हिनस्ति [2]व्यक्तवादिताम् ।
करोति [3]भक्तविद्वेषमसमः श्रीकृतो ज्वरः ॥ २८ ॥

न पश्यन्ति न शृण्वन्ति [4]नापेक्षन्ते हिताहितम् ।
न विद्मः किं[5] नु चेष्टन्ते कष्टं श्रीविप्लुता नराः ॥ २९ ॥

[6]क्रमागतेति नैतस्यामाश्वासः कोऽपि विद्यते ।
ह्योऽपि यत्रोषिता लक्ष्मीस्[7]तत्रैवाद्य न दृश्यते ॥ ३० ॥

[8]वातरक्ताभिभूतेव भिन्नपादेव कण्टकैः ।
लक्ष्मीर्निधातुं शक्नोति न क्वचिन्निर्भरं पदम् ॥ ३१ ॥

श्रीः सपत्नीमिव द्वेष्टि दृष्टिं सत्पथवर्तिनीम् ।
तां विना [9]यत्र तत्रैव पतन्त्यन्धा इवेश्वराः ॥ ३२ ॥

सत्पथस्योपदेष्टारस्तेषां प्रविरला नराः ।
[10]धूर्तैरेते हि भुज्यन्ते हृदयानुप्रवेशिभिः ॥ ३३ ॥

आपातरमणीयेषु विषयेषु निरर्गलम् ।
तैरेव हि प्रवर्त्यन्ते मुखामाधुर्यपण्डितैः ॥ ३४ ॥

धूर्तप्रतारिताश्चैते विषयासक्तचेतसः ।
अकस्मात्प्रलयं यान्ति गीतरक्ता मृगा इव ॥ ३५ ॥

विषयेष्वतिकष्टोऽयं विषयः स्त्रीति नाम यः ।
जीवत्यन्यैः किलाकृष्टस्तेना[11]कृष्टो न जीवति ॥ ३६ ॥

खलेष्व[12]कृतविस्रम्भो विषयेष्वनिमग्नधीः ।
साधुष्व[13]भिमुखो नित्यं महतीं श्रियमश्नुते ॥ ३७ ॥

---

१. 'ज्वरः' ख. २. 'व्यक्ति' ख. ३. 'भक्ति' क. ४. 'नावस्यन्ति' क. ५. 'क विचेष्टन्ते' क. ६. 'क्रमागतो न चैतस्यां' ख. ७. 'तत्राद्यैव' ख. ८. 'वातेरिताभिभूते च' क. ९. 'येऽत्र मोहान्धौ' क. १०. 'धूर्तैरेव हि दूष्यन्ते' क. ११. 'तदाकृष्टो' क. १२. अकृतसंरम्भो' क. १३. 'अभिमतो' ख.

सं त्वं न वञ्च्यसे धूर्तैर्न साधुभिरुपेक्ष्यसे ।
यथा न वेध्यसे कामैः प्रयतेथास्तथा सदा ॥ ३८ ॥
कामं भवान्प्रकृत्यैव धीरः पित्रा च संस्कृतः ।
त्वद्गुणेष्वतिसंतोषो मुखरीकुरुते स माम् ॥ ३९ ॥
युवराज धुरं पित्रा कल्पितामुद्वह स्थिराम् ।
विजितामपि चानेन पुनर्जय वसुंधराम् ॥ ४० ॥
इत्युक्त्वा विररामासौ तत्कल्याणपरायणः ।
चन्द्रापीडस्तु तद्वाग्भिरलंकृत इवाभवत् ॥ ४१ ॥
अथ पुण्येऽहनि स्नातं विधिवत्कृतमङ्गलम् ।
यौवराज्ये प्रियं पुत्रमभ्यषिञ्चन्महीपतिः ॥ ४२ ॥
अभिषेकोत्सवस्तस्य जन्मलाभोत्सवादपि ।
अधिकः सर्वलोकस्य बभूवानन्दवर्धनः ॥ ४३ ॥
सर्वाभ्यो दिग्भ्य आजग्मुर्गृहीतोपायना नृपाः ।
द्विजाश्च तुतुषुः प्राप्तगोभूकनकदक्षिणाः ॥ ४४ ॥
अन्यत्राहनि दैवज्ञश्लाघ्ययोग्यगुणान्विते ।
ददौ दिग्विजये यात्रां युवराजो नृपाज्ञया ॥ ४५ ॥
कृतप्रस्थानहोमोऽसौ विधिज्ञेन पुरोधसा ।
शस्त्रास्त्रचक्रमभ्यर्च्य शास्त्रोक्तैर्मन्त्रविस्तरैः ॥ ४६ ॥
कृतस्वस्त्ययनो विप्रैः प्रचुरस्वर्णतोषितैः ।
यत्नरुद्धास्रया मात्रा कृतप्रस्थानमङ्गलः ॥ ४७ ॥
शङ्खदुन्दुभिनिर्घोषमुखरीकृतदिङ्मुखः ।
स्तुतस्तारं पठद्भिश्च सूतमागधबन्दिभिः ॥ ४८ ॥
स्रग्विलेपनदीपादिसंभारार्चितदैवतः ।
पितरौ शुकनासं च प्रणम्य निरगाद्गृहात् ॥४९॥ (चक्कलकम्)

---

१. 'यथा न' क. २. 'आक्रम्यसे' क. ३. 'तथातथा' ख. ४. 'अपि' ख. ५. 'हि' ख.
६. 'प्रासबहुसर्वस्व–' क. ७. 'अन्याहनि च' क. ८. 'गीत–' ख. ९. 'रुद्धाश्रुको' ख.

इन्द्रायुधमथारुह्य पौरजानपदाशिषः।
शृण्वन्नगर्याः पूर्वेण द्वारेण निरियाय सः॥ ५० ॥
ततोऽनुगम्यमानोऽसौ बलाहकनिवेदितैः।
सहस्रसंख्यैः क्षितिपै[1]रुल्लसच्छत्रचामरैः॥ ५१ ॥
वैशम्पायनमेकत्र पार्श्वे श्वेताश्ववर्तिनम्।
अन्यत्र पत्रलेखां च पश्यन्नश्वतरीस्थिताम्॥ ५२ ॥
तस्मिन्नहनि स स्तोकं [2]प्रस्थायोच्छ्रिततोरणम्।
चित्रं निवासमध्यास्त सि[3]प्राकूले [4]प्रकल्पितम्॥५३॥ (तिलकम्)
अथापरेद्युरुत्थायाशेषाभरणभूषितः।
प्रावर्तत प्रबन्धेन प्रस्थातुमतुलोद्यमः॥ ५४ ॥
पीडयन्न[5]थ सैन्येन पातालतलवासिनः।
रजसा च तदुत्थेन स्थगयन्गगनस्थितान्॥ ५५ ॥
नमयन्नुन्नतान्भूपान्[6]नतान्परिपालयन्।
[7]अवशानुत्खनन्कांश्चिदुत्खातान्प्रतिरोपयन्॥ ५६ ॥
विश्वासयन्नविश्वस्तान्संरक्षञ्शरणागतान्।
दस्यूनुत्सादयन्दण्डैः साधून्संमानयन्धनैः॥ ५७ ॥
ब्राह्मणेभ्यो ददद्ग्रामान्कुर्वन्देवकुलावलीः।
न[9]वानि निजचिह्नानि [10]तत्र तत्र प्रवर्तयन्॥ ५८ ॥
वर्षत्रितयमात्रेण समग्रामर्णवावधिम्।
स बभ्राम प्रबन्धेन मांधातेव वसुंधराम्॥ ५९ ॥ (कुलकम्)
जिगाय प्रथमं प्राचीं दिशं तदनु दक्षिणाम्।
[11]ततः प्रतीचीं पश्चाच्च प्रतापनिधिरुत्तराम्॥ ६० ॥
अथ हेमजटाख्यानां किरातानां निकेतनम्।
स सुवर्णपुरं [12]जित्वा दण्डं जग्राह हेलया॥ ६१ ॥

---

१. 'अलस-' क. २. 'प्रस्थानोच्छ्रित-' क. ३. 'प्राक् प्राक्कूले' ख. ४. 'अत्र कल्पितम्' क. ५. 'इव' ख. ६. 'नतांश्च' ख. ७. 'अवश्यान्' ख. ८. 'उत्सारयन्' क. ९. 'वनानि' ख. १० 'यत्र तत्र' क. ११. 'ततश्च पश्चिमां शूरः' क. १२. 'गत्वा' ख.

यैा च कैलाससीमान्तर्भूर्नितान्तममनोरमा ।
तस्यां दिग्विजयश्रान्तः कियतोऽप्यास्त वासरान् ॥ ६२ ॥
एकदा तु स तत्स्थानादारुह्येन्द्रायुधं वने ।
मृगयानिर्गतोऽपश्यत्किंनर्यौ सह किंनरम् ॥ ६३ ॥
आलोक्य कौतुकाकृष्टदृष्टिरश्वमुखौ च तौ ।
आदित्सुः प्रेरयामास तावेव प्रति वाजिनम् ॥ ६४ ॥
अपूर्वपुरुषालोकत्रासात्कैलासकंदरम् ।
प्रवेष्टुकामौ महता वेगेनानुससार तौ ॥ ६५ ॥
पार्ष्णिप्रहरणाभ्यासग्राहितोदग्ररंहसा ।
पञ्चयोजनमाना भूस्तेनाश्वेन व्यलङ्घ्यत ॥ ६६ ॥
तौ च पर्वतमारूढावग्रतस्तस्य किंनरौ ।
ततस्तद्ग्रहणाकाङ्क्षां हृदयादुत्ससर्ज सः ॥ ६७ ॥
अशक्तोऽनुसर्तुं च कश्चित्परिजनो न तम् ।
तार्क्ष्येणाप्यनुगम्येत धावन्निन्द्रायुधः कुतः ॥ ६८ ॥
अथ वल्गां समाकृष्य श्रमस्वेदार्द्रविग्रहम् ।
दृष्ट्वैकाकिनमात्मानं श्वसन्तं च तुरंगमम् ॥ ६९ ॥
निर्वर्णयंस्तमुद्देशं मानुषाणामगोचरम् ।
विहस्यैवात्मनात्मानं सानुतापमचिन्तयत् ॥ ७० ॥
अहो किमपि मे मौर्ख्यमस्थानाभिनिवेशिनः ।
यदात्मा बालकेनेव व्यर्थमायासितो मया ॥ ७१ ॥
अगृहीतेन को[13] वार्थः कोऽर्थः प्राप्तेन वामुना ।
किंनरद्वितयेनेति मया मूढेन नेक्षितम् ॥ ७२ ॥

१. 'याथ' क. २. 'अध्यास्त' क. ३. 'तत्स्थ एवासौ' क. ४. 'कौतुकाविष्ट-' क. ५. 'सहसा' ख. ६. 'उदार-' क. ७. 'मात्रा' क. ८. 'पश्यन्निःश्वस्य' क. ९. 'ग्रहणे काङ्क्षां' ख. १०. 'उपसर्तुं' क. ११. 'मनुष्याणां कथातिगम्' क. १२. 'दारकेणेव' क. १३. 'कोऽनर्थः' क. १४. 'पुनः' क.

पन्था निरूपितो नायमाविष्टेनेव धावता ।
न चात्र लभ्यते मर्त्यो मम मार्गस्य देशि[1]कः ॥ ७३ ॥
श्रूयते किल वर्षस्य भारतस्यावसानभूः ।
कैलाससंनिकृष्टेयमिह मर्त्यस्य का कथा ॥ ७४ ॥
वने पर्णतृणाकीर्णे पादमुद्राश्च वाजिनः ।
न स्युर्यद[2]नुसारेण यास्यामि शिबिरं नि[3]जम् ॥ ७५ ॥
केवलं दक्षिणामाशां पुरस्कृत्य यथातथा ।
गन्तव्यं किं तु मध्याह्नसमयोऽयमुपस्थितः ॥ ७६ ॥
अनुभूतोऽति[4]मात्रं च खेदस्तदिह सांप्रतम् ।
लब्ध्वा कुतोऽप्यपस्ताभिर्यास्यामि विगतश्रमः ॥ ७७ ॥
[5]इति संचिन्त्य पानीयमन्वेषितुमितस्ततः ।
परिभ्रमन्घनस्निग्धं शाखिनां [6]खण्डमैक्षत ॥ ७८ ॥
ततस्तदनुकूलेन पथा गच्छन्समीरणैः ।
आह्लाद्यत नवोत्फुल्लकमलामोदवाहिभिः ॥ ७९ ॥
मत्तद्विपप[7]दासक्तमृणालदलदन्तुरम् ।
स पन्थानमथापश्यदम्भसामनुमापकम् ॥ ८० ॥
तेन गत्वाग[8]खण्डस्य मध्ये जलधिसंनिभम् ।
अदृष्टापारपर्यन्तमालुलोके महत्सरः ॥ ८१ ॥
तदालोकनमात्रेण दूरादपगत[9]क्लमः ।
प्राप्य तत्पुलिनोपान्तं वाजिनोऽवततार सः ॥ ८२ ॥
कृत्वापनीतपर्याणं तं स्थलीलुठितोत्थितम् ।
गृहीतशाद्वलग्रासमा[10]प्लुताधूतकेसरम् ॥ ८३ ॥
उत्तार्य सरसस्तीरतरौ संयम्य वाजिनम् ।
क्षिप्त्वासिधेनुलूनानि तृणान्येतस्य चाग्रतः ॥ ८४ ॥

१. 'दैशिकः' क. २. 'अनुमानेन' क. ३. 'शनैः' ख. ४. 'अतिन्मात्रेण' ख. ५. 'इत्थं विचिन्त्य' ख. ६. 'पण्डं' क. ७. 'मदासिक्त' क. ८. 'षण्डस्य' क. वृक्षसमूहस्येत्यर्थः. ९. 'श्रमः' ख. १०. 'आप्लुतोद्धूत' क.

स्वयं सस्नौ पपौ वारि बुभुजे बिसकन्दलीः ।
उत्तरीयशिरोधानो निषसाद शिलातले ॥ ८५ ॥ ( तिलकम् )
ततो मुहूर्तविश्रान्त उत्तरस्मिन्सरस्तटे ।
समुच्चरन्तं शुश्राव गीतध्वनिममानुषम् ॥ ८६ ॥
तस्यां दिशि दृढासक्तचक्षुरुत्क्षिप्तकंधरः ।
तमादौ निबिडश्रोत्रशुक्तिरिन्द्रायुधोऽशृणोत् ॥ ८७ ॥
कुतोऽत्र विजने गीतमित्याविष्कृतकौतुकः ।
उत्थाय चन्द्रापीडोऽथ तामेव दिशमभ्यगात् ॥ ८८ ॥
गीतश्रवणलुब्धेन सलीलमभिधावता ।
अपृष्टेनापि मार्गोऽस्य मार्गेणैव न्यवेद्यत ॥ ८९ ॥
गत्वा प्रासादमैक्षिष्ट स्फाटिकं नातिदूरतः ।
हसन्तमिव कैलासशोभाविभवमंशुभिः ॥ ९० ॥
देवं चतुर्मुखं तत्र रत्नपीठप्रतिष्ठितम् ।
भगवन्तमुमाकान्तं ददर्श प्रणनाम च ॥ ९१ ॥
तस्याथ दक्षिणां मूर्तिमाश्रित्य विहितासना ।
उत्सङ्गनिहितां वीणां वादयन्ती कलस्वनम् ॥ ९२ ॥
देहप्रभावितानेन कुन्दगौरेण सर्पता ।
साक्षाल्लक्ष्मीरिव क्षीरजलधेर्मध्यवर्तिनी ॥ ९३ ॥
कोपाग्निशमितानङ्गप्रत्युज्जीवनवाञ्छया ।
रतिः प्रसादयन्तीव तपसा पार्वतीपतिम् ॥ ९४ ॥
नवेऽपि वयसि प्राप्तवैराग्याभ्यासवासना ।
व्यलोकि कन्यका तेन धृतपाशुपतव्रता ॥ ९५ ॥
चन्द्रापीडोऽथ तां दृष्ट्वा विस्मयाविष्टमानसः ।
केयं स्यात्कन्यका नास्या दिव्यतां प्रति संशयः ॥ ९६ ॥
( चक्कलकम् )

---

१. 'अथ' ख. २. मृगसमूहेनेत्यर्थः. ३. 'लक्ष्मी' ख. ४. 'कलस्वना' क. ५. 'प्रियम्' ख. ६. 'तु' ख.

नान्तर्धानमियं गच्छेन्न वा गगनमुत्पतेत् ।
न मौनमवलम्बेत मर्त्यसंदर्शनेन वा ॥ ९७ ॥
इत्यादि चिन्तयन्नास्त [1]स्तम्भाच्छादितविग्रहः ।
गीतावसानसमयप्रतीक्षणपरायणः ॥ ९८ ॥ (तिलकम्)
[2]सोथ गीतं समापय्य विनिधाय च[3] वल्लकीम् ।
प्रणम्य चन्द्रचूडाय चन्द्रापीडमभाषत ॥ ९९ ॥
अतिथे स्वागतं ते[4]ऽस्तु सौम्य विश्रम्यतामिह[5] ।
प्राप्तोऽसि स्वामिमां भूमिमित आगम्यतामिति ॥ १०० ॥
चन्द्रापीडस्तदाकर्ण्य बह्वात्मानममन्यत ।
व्रजन्तीमनु वव्राज देवतावत्प्रणम्य ताम् ॥ १०१ ॥
विवेश नातिदूरेऽथ[6] नि[7]जाश्रमगुहामसौ ।
स्थिताजिनकुशालाबुपात्रदण्डकमण्डलुम् ॥ १०२ ॥
तत्र दर्भासनासीनमुपविष्टा मृगाजिने ।
पप्रच्छ चन्द्रापीडं सा स्वरूपागमनादिकम् ॥ १०३ ॥
स तु सर्वं यथावृत्तमाचचक्षे सविस्तरम् ।
सा [8]च विज्ञातवृत्तान्ता निर्जगाम [9]ततो बहिः ॥ १०४ ॥
गृहीतभिक्षापात्रा च क्षणमास्त तरोरधः ।
आपूर्यत स्वयं शीर्णैः फलैस्तदमृतोपमैः ॥ १०५ ॥
ततस्तदुपयोगाय चन्द्रापीडं न्ययुङ्क्त सा ।
[10]अन्वतिष्ठद्वचस्तस्याः स च विस्मयमानधीः ॥ १०६ ॥
तस्मिन्नथ कृताहारे गिरिप्रस्रवणा[11]न्तिकम् ।
गत्वा सापि फलहारप्रक्रियामात्रमाचरत् ॥ १०७ ॥
आगत्य च पुनस्तस्मिन्नुपविष्टा मृगाजिने ।
तारापीडोज्जयिन्यादिकथया क्षणमास्त सा ॥ १०८ ॥

---

१. 'स्तम्भावासित–' ख. २. 'सा तु' ख. ३. 'तु' ख. ४. 'तुभ्यं' ख. ५. 'इति' ख. ६. 'च' क. ७. 'निजासन–' ख. ८. 'तु विज्ञाय वृत्तान्तं' ख. ९. 'बहिर्मुहुः' ख. १० 'खादति साज्ञया तस्याः' ख. ११. 'अन्तिके' ख.

अपि नाम स्ववृत्तान्तं मद्वदेषापि वर्णयेत् ।
प्रेष्ठेत्येवं क्षणं दध्यौ चन्द्रापीडः सकौतुकः ॥ १०९ ॥

दृष्ट्वा चास्याः प्रशममधुरामाकृतिं भावशुद्धिं
दाक्षिण्यं च प्रकृतिसरलं लब्धवाक्यावकाशः ।
आत्मोदन्तं नियतमखिलं वक्ष्यति प्रार्थितेयं
चन्द्रापीडः क्षणमथ कृतप्रश्नसंप्रत्ययोऽभूत् ॥ ११० ॥

इति श्रीविपश्चिद्राग्रगण्याचार्यभट्टश्रीजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे तृतीयः सर्गः ।

---

चतुर्थः सर्गः ।

स तद्गुणप्रभावर्द्धिवर्धमानकुतूहलः ।
तामवोचत माधुर्यविनयोदारया गिरा ॥ १ ॥
त्वत्प्रसादकृतेनैव प्रागल्भ्येन ममामुना ।
मनो भगवति प्रश्नचापले विनियुज्यते ॥ २ ॥
न मादृशदृशां भूमिरियमाश्चर्यसंततिः ।
तदाख्यानप्रसादेन जनोऽयमनुगृह्यताम् ॥ ३ ॥
कतमो मुनिगन्धर्वसिद्धविद्याधरादिषु ।
पुण्येन जन्मना वंशो भगवत्या विभूषितः ॥ ४ ॥
पञ्चभूतात्मकं चेदं धत्ते धवलतां वपुः ।
कथं कामपि दिग्दन्तिदन्तकान्त्यतिशायिनीम् ॥ ५ ॥
नवे वयसि किं चातितीव्रवैराग्यकारणम् ।
येनारण्यनिवासादि दुःखमीदृग्विषह्यते ॥ ६ ॥
इति तस्मिन्वदत्येव स्थूलाश्रुकणवर्षिणी ।
रुरोद वल्कलच्छन्नवदना दिव्यकन्यका ॥ ७ ॥
अकम्पत मनश्चैनां चन्द्रापीडस्य पश्यतः ।
इयमप्याकृतिर्नाम दुःखैर्यदभिभूयते ॥ ८ ॥

---

१. 'महादेशेन' ख. २. 'पृष्टेति क्षणमादध्यौ' ख. ३. 'प्रकृति-' ख. ४. 'सरलं' ख. ५. 'क्षणकृतरतिः' ख. ६. 'अधुना मम' क. ७. 'भगवती' ख. ८. 'वासो' ख. ९. 'द्वन्द्वैः' ख.

असौ चिरं रुदित्वा तु[1] वल्कलोन्मृष्टलोचना।
दीर्घमुष्णं च निःश्वस्य व्याहर्तुमुपचक्रमे ॥ ९ ॥
राजपुत्र किमेतेन शोकैकवसतेर्मम।
पापाया मन्दभाग्याया वृत्तान्तेन श्रुतेन ते ॥ १० ॥
तथापि यदि ते चित्तं कुतूहलवशीकृतम्।
तदिदं वर्ण्यते सर्वमाकर्णय यथाक्रमम् ॥ ११ ॥
सुप्रसिद्धमिदं तावत्तव श्रुतिपथं गतम्।
यत्सन्त्यप्सरसो नाम सुरसद्मनि कन्यकाः ॥ १२ ॥
चतुर्दश च तद्वंशाः पृथक्पृथगवस्थिताः।
सोमामृतसमीरार्कदक्षक[2]न्यादिसंभवाः ॥ १३ ॥
दक्षकन्योद्भवं तेषु गन्धर्वाणां कुलद्वयम्।
कन्ये मु[3]निरि[4]रिष्टेति द्वे दक्षस्य बभूवतुः ॥ १४ ॥
तत्र चित्ररथो नाम गन्धर्वाणामधीश्वरः।
मु[5]नेः श्रुतयशाः पुत्रश्चित्रसेनादिपूर्वजः ॥ १५ ॥
तुम्बुरुप्रभृतीनां तु ज्येष्ठोऽरिष्टासुतः कृती।
हंसाभिधानो गन्धर्वराजः प्रथितपौरुषः ॥ १६ ॥
अकृत्रिममनुत्पन्नमन्युकालुष्यदूषणम्।
रू[6]ढं परस्परं प्रेम तयोर्गन्धर्वराजयोः ॥ १७ ॥
इतश्च नातिदूरेऽस्ति नानारत्नोज्ज्वलो गिरिः।
हेमकूट इति ख्यातः स निवासस्तयोर्द्वयोः ॥ १८ ॥
तस्मिन्वसन्त्यसंख्यातास्तद्भुजस्तम्भसंश्रिताः।
गन्धर्वास्तौ[7] च विस्रम्भभूमिर्जम्भद्विषः प[8]रा ॥ १९ ॥
अथ यत्सोमसंभूतमेकमप्सरसां कुलम्।
गौरी नामोदभूत्कन्या तस्मिन्प्रतिकृतिर्विधोः[9] ॥ २० ॥

---

१ 'च' ख. २ 'मन्वादि' ख. ३. 'मतिः' क. ४. 'च रिष्टेति' ख. ५. 'मतेः' क. ६. 'गाढं' ख. ७. 'ते' क. ८. 'पुरा' क. ९. 'श्रियः' ख.

हंसो गन्धर्वराजस्तामुदूहे तुहिनप्रभाम्।
ततो यथार्थं नामाप सर्वथा हंसगामिनी ॥ २१ ॥
चिरसंभृतविस्रम्भनिर्भरं गृहवासिनोः।
तयोरुदभवत्सूनुरेकोऽपि न महात्मनोः ॥ २२ ॥
अहं तु मन्दभाग्यैका कन्या दुष्कृतकारिणी।
उदभूवं तयोरस्य दुःखभारस्य भाजनम् ॥ २३ ॥
अनपत्यतया तातो मज्जन्म सुतजन्मवत्।
अभ्यनन्दत्कृतानन्दः कृतोदारमहोत्सवः ॥ २४ ॥
देहच्छायामिमां वीक्ष्य तातः सोमक्रमागताम्।
चक्रे वर्णानुरूपं स महाश्वेतेति नाम मे ॥ २५ ॥
साहं पितृगृहे बाला वल्लकीव कलस्वना।
संचरन्ती स्वबन्धूनामङ्कादङ्कमहर्निशम् ॥ २६ ॥
अनवाप्तरसास्वादस्नेहादिद्वन्द्वसंततिः।
अत्यवाहयमक्लेशपेशलस्थिति शैशवम् ॥ २७ ॥ (युगलकम्)
अथ बाल्यात्परं प्रापमहं नानारसास्पदम्।
मनोभवविकाराणामेकमायतनं वयः ॥ २८ ॥
कदाचिदथ रम्येषु मधुमासदिनेष्वहम्।
अच्छोदसरसि स्नातुमागतेह सहाम्बया ॥ २९ ॥
अदृष्टपूर्वामन्यत्र विभूतिमिह माधवीम्।
सखीभिः सह पश्यन्ती कानने व्यचिरं चिरम् ॥ ३० ॥
एकस्मिंस्तु प्रदेशेऽन्यपुष्पगन्धाभिभाविनम्।
अभ्यजिघ्रमनाघ्रातपूर्वमामोदमद्भुतम् ॥ ३१ ॥
तस्य प्रभवजिज्ञासारसेन विहितत्वरा।
नातिदूरं ततो गत्वाऽपश्यं मुनिकुमारकम् ॥ ३२ ॥

---

१. 'यतो यथार्थतामाप' क. २. 'भागिनी' क. ३. 'धृतानन्दः' क. ४. 'ततः' क. ५. 'प्राप्तं मया नानारसोचितम्' ख. ६. 'अस्मि' ख. ७. 'मञ्जरीमहमार्तवीम्' ख. ८. 'कस्मिंश्चिदपि देशे' ख. ९. 'प्रभाव' ख.

अस्पृष्टमिव कंदर्पमीशाननयनार्चिषा।
कलङ्कविप्रुषा बिम्बमदूषितमिवैन्दवम् ॥ ३३ ॥
विरुद्धैरपि रूपस्य मेखलाजिनवल्कलैः।
कृताधिकमनोहारिरूपातिशयविभ्रमम् ॥ ३४ ॥
तेन कर्णे कृता काचिद[1]पूर्वतरुमञ्जरी।
ततः प्रवृत्तमामोदं [2]समाघ्रातवती मुहुः ॥ ३५ ॥
तं कुतोऽप्यागतं कान्तं लावण्यामृतनिर्झरम्।
[3]चक्षुषा संपिबन्तीव कौतुकोत्क्षिप्तपक्ष्मणा ॥ ३६ ॥
रूपैकपक्षपातेन गुणदोषानपेक्षिणा।
ततः कुसुमबाणेन नीतास्मि वशमात्मनः ॥ ३७ ॥
ततोऽपसर्तुकामाहमप्रगल्भतया मुहुः।
केनापि प्रेर्यमाणेव तदन्तिकमु[4]पागमम् ॥ ३८ ॥
वन्द्यो मुनिजन[5]श्चेति प्रचलन्मणिकुण्डलम्।
अकार्षं वन्दनं तस्मै तन्मुखन्यस्तलोचना ॥ ३९ ॥
ततः कृतप्रणामायां मयि सोऽपि मनोभुवः।
पतितो गोचरे चित्रम[6]लङ्घ्या भवितव्यता ॥ ४० ॥
स्मरोपदिष्टयेवाथ बुद्ध्वा तद्विकृतिं धिया।
[7]लब्धास्था तत्स्वरूपादिप्रश्नप्रागल्भ्यमागमम् ॥ ४१ ॥
अथ पार्श्वस्थमप्राक्षमन्यं मुनिकुमारकम्।
तुल्यतेजस्तपोवेषं तस्य सब्रह्मचारिणम् ॥ ४२ ॥
भगवन्कथ्यतां कोऽयं किमाख्यः किमि[8]हागतः।
कर्णे च निहितानेन कस्येयं मञ्जरी तरोः ॥ ४३ ॥
सोऽब्रवीत्सुर[9]लोकेऽस्ति सुरासुरशिरोर्चितः।
श्वेतकेतुरिति ख्यातो रूपेणाप्रतिमो मुनिः ॥ ४४ ॥

१. 'अपूर्वा' ख. २. 'समर्थितवती' क. ३. 'चक्षुषैव पिबन्तीव' ख. ४. 'उपागता' क. ५. 'तेन' क. ६. 'अवन्ध्या' ख. ७. 'लब्धावकाशरूपादि' ख. ८. 'आगम,' ख. ९. 'लोकेषु' ख.

पुण्डरीकसरः स्नातुमेगमत्स कदाचन ।
नित्यं संनिहिता तत्र लक्ष्मीरेनं व्यलोकयत् ॥ ४५ ॥
सा तदालिङ्गनेनेव दर्शनेनैव केवलम् ।
पुण्डरीके कृतार्थत्वमवाप स्वासनीकृते ॥ ४६ ॥
उदपादि तदैवास्य कुमारः स तया श्रिया ।
तव पुत्रोऽयमित्युक्त्वा न्यवेदि श्वेतकेतवे ॥ ४७ ॥
सोऽपि योगदृशा दृष्ट्वा यथावत्सुतमग्रहीत् ।
नाम जन्मोचितं चास्य पुण्डरीक इति व्यधात् ॥ ४८ ॥
योजयामास संस्कारैरेनं मुनिजनोचितैः ।
अतीते बालभावे च न्ययुङ्क्त तपसे पिता ॥ ४९ ॥
अयं स पुण्डरीकस्ते वर्णितः शृणु मञ्जरीम् ।
चतुर्दशीति कृत्वाद्य प्रस्थितोऽयं शिवालयम् ॥ ५० ॥
व्रजतो नन्दनेनास्य वनदेवतया स्वयम् ।
त्वदाकृतेरलंकारस्तुल्योऽयमिति सादरम् ॥ ५१ ॥
पारिजातद्रुमादेषा दुग्धोदधिसमुद्भवात् ।
आदाय मञ्जरीकर्णेऽनिच्छतोऽपि निवेशिता ॥५२॥ (युगलकम्)
इति तस्मिन्वदत्येव चपले गृह्यतामियम् ।
किमनेन तव प्रश्नलोभेनेत्यभिधाय माम् ॥ ५३ ॥
अनायि मुनिना तेन सा सुरद्रुममञ्जरी ।
अपनीय निजात्कर्णान्मम कर्णावतंसताम् ॥५४॥ (युगलकम्)
मत्कपोलतलस्पर्शप्रकम्पतरलाङ्गुलेः ।
तेन प्रस्खलिता हस्तादक्षमाला न लक्षिता ॥ ५५ ॥
अप्राप्तैव च सा भूमिं गृहीता सहसा मया ।
अस्मिन्नवसरे छत्रग्राहिणी मामवोचत ॥ ५६ ॥

---

१. 'पुण्डरीकं' ख. २. 'अयासीत्' ख. ३. 'अथ' ख. ४. 'जन्मानुगं' ख. ५. 'अ-तीव' ख. ६. 'मलाय' क. ७. 'चास्य' ख. ८. 'तनुग्राहखेदेन' ख. ९. 'भ्रस्यन्ती तेन नाज्ञायि स्वाक्षमाला निजात्करात्' ख. १०. 'अग्राहि' ख. ११. 'तस्मिन्' ख.

स्नाता देवी चिरं भर्तृदारिके गम्यतामिति ।
ततः प्रतिनिवृत्तायां मयि [1]तं स सखावदत् ॥ ५७ ॥
वयस्य किमिदं चेतस्तव विप्लुतमीदृशम् ।
हृतामप्यनयाज्ञासीरक्षमालां न कन्यया ॥ ५८ ॥
हृता नामेयमनया हृदयं ननु रक्ष्यताम् ।
ततोऽसौ पुनरागत्य कृतकोपमिवा[2]वदत् ॥ ५९ ॥
अपहृत्याक्षमालां मे क चौरि ननु गम्यते ।
अथ मन्दं विहस्येव मयास्य निहिता करे ॥ ६० ॥
[3]अवमुच्याक्षमालेति कण्ठान्मुक्तावली नि[4]जात् ।
साप्यलक्ष्यत नानेन मन्मुखासक्तदृष्टिना ॥ ६१ ॥ (युगलकम्)
सखीभिरपि मे दृष्टमिदं चापलमि[5]त्यहम् ।
किंचित्संजातलज्जेव [6]सरस्तीरमागमम् ॥ ६२ ॥
[7]अत्राहमस्वतन्त्रैव [8]क्षणं स्नात्वा यथातथा ।
[9]अगच्छमम्बया साकं तद्गुणाध्यायिनी गृहम् ॥ ६३ ॥
गत्वा सवेदनासीति विसृज्य सकलाः सखीः ।
प्रविश्यैकाकिनी गेहमासं मोहविसंस्थुला ॥ ६४ ॥
क गतासि किमुक्तासि तेन कोऽसावहं च का ।
किमिदं कः प्रकारोऽयमिति नाज्ञासिषं तदा ॥ ६५ ॥
मुहूर्तादे[10]व[11] ताम्बूलकरङ्कग्राहिणी मम ।
प्रिया तरलिका नाम प्रविश्येदमथाब्रवीत् ॥ ६६ ॥
कर्णे मुनिकुमारेण कृता ते येन मञ्जरी ।
त्वय्यागतायां पृष्टासि स्वरूपं तेन तावकम् ॥ ६७ ॥
तच्छ्रुत्वा च स्वयं तेन लिखित्वा वल्कपट्टिका ।
एकाकिन्यै त्वया तस्यै देयेत्युक्त्वा समर्पिता ॥ ६८ ॥

---

१. 'तस्य' ख. २. 'अब्रवीत्' ख. ३. 'मुक्तेयं' क. ४. 'निजा' क. ५. 'उच्चकैः' ख. ६. 'सरस्तटमुपागमम्' ख. ७. 'तत्र' ख. ८. 'मुहुः' ख. ९. 'अगच्छं' इत्यादि-सार्धश्लोकः ख-पुस्तके नास्ति. १०. 'किमायाता दृष्टः' ख. ११. 'इव' ख.

ततस्तरलिकायास्तां हस्तादादाय पट्टिकाम् ।
तस्यां तु लिखितामार्यामिमामहमवाचयम् ॥ ६९ ॥
"दूरं मुक्तालतया बिससितया विप्र[1]लोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः" ॥ ७० ॥
सा तु तैमिरिकस्येव बभूव बहुलक्षपा ।
मोहायार्योऽप्यनार्ये[2]व सुतरां मनसो मम ॥ ७१ ॥
वद तेन किमुक्तासि स किमुक्तस्त्वयापि वा ।
तदन्तिके च विस्रब्धमुषितासि कियच्चिरम् ॥ ७२ ॥
इत्थं तरलिकां तै[3]स्तदालपन्ती पुनः पुनः ।
कांचिदहस्ततो मात्रामुन्मत्तेवात्यवाहयम् ॥ ७३ ॥
अथ प्रलम्बमानेऽर्के प्रतीहारी प्रविश्य मे ।
भर्तृदारिकया दृष्टौ यौ तौ मुनिकुमारकौ ॥ ७४ ॥
तयोरन्यतरो द्वारि तिष्ठतीति न्यवेदयत् ।
शीघ्रं प्रवेशयेत्युक्ता मया तदभिशङ्कया ॥ ७५ ॥
सा च प्रवेशयामास तस्य तं सहचारिणम् ।
सत्कारेणोचितेनाहं भक्त्या चैनमपूजयम् ॥ ७६ ॥ (तिलकम्)
मुहूर्तमिव विश्रम्य पर्यङ्के मदुपाहृते ।
मदुत्तरीयसंमृ[4]ष्टसुधौतचरणद्वयः ॥ ७७ ॥
दृष्टिं तरलिकायां स वक्तुकामः क्षणं न्य[5]धात् ।
मया सो[6]ऽज्ञायि पृष्टस्तु लज्जमान इवाभ्यधात् ॥ ७८ ॥
अहं कपिञ्जलो नाम तस्य बालसुहृन्मुनेः ।
न वाक्प्रवर्तते मेऽस्मिन्ननभ्यस्त इवाध्वनि ॥ ७९ ॥
क्वायं मुनिजनः शान्तः क चामी रागविभ्रमाः ।
तथापि व्यवसायोऽयं[7] सुहृत्स्नेह[8]वशानुगः ॥ ८० ॥

---

१. 'विप्रलभ्यमानः' क. २. 'एव' ख. ३. 'तत्र' च' ख. ४. 'संमृष्टमाधौतचरणद्वयम्' ख. ५. 'व्यधात्' ख. ६. 'स ज्ञाय' ख. ७. 'मे' ख. ८. 'रुजाश्रितः' क.

तदुच्यते प्रयातायां राजपुत्रि तदा त्वयि ।
हस्ते मुक्तावलीं बिभ्रत्स मदन्तिकमागतः ॥ ८१ ॥
अहो रम्याक्षमालेयं त्वयानीतेति तत्क्षणम् ।
विहस्य स मया नोक्तः किंचिच्चिन्तोपशान्तये ॥ ८२ ॥
नोपदेशप्रकारोऽसौ न स दृष्टान्तविस्तरः ।
न सोऽस्त्युपायो मन्त्रो वा यो मया नाभ्यधीयत ॥ ८३ ॥
वचोभिः खिद्यमानो मे त्रपानतशिरोधरः ।
क्षणमन्तर्हितो मत्तः सुतरां मामपीडयत् ॥ ८४ ॥
कृच्छ्रादिव मया लब्धो विचित्य सकलं वनम् ।
अन्य एव स संवृत्तो वचसां यो न गोचरः ॥ ८५ ॥
तदवस्थं समालोक्य विगताशः प्रबोधने ।
अहं तत्प्राणरक्षार्थमेवं यत्नपरोऽभवम् ॥ ८६ ॥
आस्तीर्य नलिनीपत्रशयनं चन्दनोक्षितम् ।
तत्रस्थस्यास्य कर्पूरपांसूनङ्गेष्ववाकिरम् ॥ ८७ ॥
त्रपया तदवस्थोऽपि स किंचिद्वक्तुमक्षमः ।
सबाष्पमलिनां दीनां मयि दृष्टिमपातयत् ॥ ८८ ॥
ततोऽहमिदमेवात्र प्राप्तकालमचिन्तयम् ।
राजपुत्रि सुहृत्प्राणदक्षिणार्थमुपागतः ॥ ८९ ॥
अतः परं तु सामर्थ्यगतार्था मम या गिरः ।
कण्ठे विपरिवर्तन्ते नूनं त्वमपि वेत्थ ताः ॥ ९० ॥
इति तस्मिन्वदत्येव प्रविश्य प्राह कञ्चुकी ।
त्वमस्वस्थशरीरेति ज्ञात्वा देवी समागता ॥ ९१ ॥
तच्छ्रुत्वा जनसंमर्दभीरुर्यातः कपिञ्जलः ।
न स प्रतिवचः किंचिन्मामकीनमपैक्षत ॥ ९२ ॥

१. 'विदूयसे' ख. २. 'ममान्तिकं' ख. ३. 'चिन्तोपपत्तये' ख. ४. 'च' क. ५. 'विविच्य' ख. ६. 'वृत्तान्तो' ख. ७. 'विरताशः' ख. ८. 'अथ' क. ९. 'यत्न-करो' क. १०. 'ततस्तस्यापि' क. ११. 'पांसुं' क. १२. 'सबाष्पमातुरां' क. १३. 'रक्षणार्थं' क. १४. 'भीतो' क. १५. 'नैव' क.

तदुक्तां तु दशां तस्य जन[1]स्संवेत्य तादृशीम् ।
आगतां नागतां वापि नाह[2]मम्बामलक्षयम् ॥ ९३ ॥
ततः कमलिनीं [3]रक्तां त्यक्त्वा क्वापि गते रवौ ।
उदिते सर्वथा वामे विधौ [4]वैधुर्यदायिनि ॥ ९४ ॥
उन्मूलितेव कामेन दग्धेव विरहाग्निना ।
पुनस्तरलिकामेव साश्रुकण्ठमवादिषम् ॥ ९५ ॥
अहं यथातथा वापि भवेयं स तु मत्कृते ।
कथं भविष्यतीत्येषा चिन्ता [5]दलयतीव माम् ॥ ९६ ॥
इतः शास्त्रं कुलाचारो लज्जा गुरुजनाद्भयम् ।
इतः [6]कामो वसन्तोऽपि विरहो मरणाद्भयम् ॥ ९७ ॥
वद किं करवाण्यत्र मुह्यतीव मनो मम ।
माभून्मे [7]नरके विप्रप्राणबाधेन मज्जनम् ॥ ९८ ॥
इत्यादि विलपन्त्या मे तत्कालसुलभोदया ।
जहार चेतनां मूर्च्छा निद्रेव नयनद्युतिम् ॥ ९९ ॥
अथ मां ग्राहयित्वासौ संज्ञां शीतजलानिलैः ।
निपत्य पादयोः साश्रुनेत्रा तरलिका[8]ब्रवीत् ॥ १०० ॥
[9]किं शास्त्रं गुरवः के च का लज्जा का कुलस्थितिः ।
रक्ष्यन्तामात्मनः प्राणा यूनस्तस्य च सर्वथा ॥ १०१ ॥
गन्धर्वाणां विवाहोऽयमिच्छयान्योन्यसंगमः ।
शास्त्रेषु पठितस्तस्मात्तूर्णमुत्तिष्ठ गम्यताम् ॥ १०२ ॥
[10]तयैवमुक्त्वा तत्कालयोग्यवेषग्रहा गृहात् ।
तामेकामग्रतः कृत्वा निर्गताहमलक्षिता ॥ १०३ ॥
अभ्यागममिमां भूमिमौत्सुक्य[11]चटुलैः पदैः ।
तदा मे दक्षिणं चक्षुरस्पन्दत मुहुर्मुहुः ॥ १०४ ॥

---

१. 'आवेद्य' ख. २. 'ह्यम्बामहं' क. ३. 'त्यक्त्वा रात्रौ' ख. ४. 'वैधेयनाशिनि' ख. ५. 'दोलायतीव' ख. ६. 'कामोऽतिदुर्धर्षो' ख. ७. 'दुस्तरे विप्रवधेनसि निमज्जनम्' ख. ८. 'अवदत्' ख. ९. 'किं शास्त्रं' इत्यादिश्लोकः ख. पुस्तके नास्ति. १०. 'तया' ख. ११. 'चतुरैः' क.

अव्यक्तमिव चाश्रौषं कानने रुदितध्वनिम्।
तेन चोत्पन्नशङ्काहमगच्छम[1]धिकत्वरम्॥ १०५॥
पदानि कतिचिद्गत्वा हा वयस्य तपोनिधे।
पुण्डरीक क्व यातोऽसि [2]शून्यं कृत्वा जगत्त्रयम्॥ १०६॥
हा हतोऽसि विलीनोऽसि दग्धोऽसि करवाणि किम्।
गत्वा तातस्य वक्ष्यामि श्वेतकेतोः किमग्रतः॥ १०७॥
[3]अयि पापे महाश्वेते न तुष्टास्यक्षमालया।
हृता मे सुहृदोऽमुष्य प्राणवृत्तिरपि त्वया॥ १०८॥
वयस्य देहि मे वाचं न जीवामि त्वया विना।
ततोऽशृणवमित्यादिविलपन्तं कपिञ्जलम्॥१०९॥ ([4]चक्कलकम्)
अथ [5]प्रवेपमानाङ्गी विसंस्थुलपदक्रमा।
केनाप्युत्क्षिप्य नीतेव तं प्रदेशमयाशिषम्॥ ११०॥
गत्वा तमहमद्राक्षं [6]तत्क्षणोत्क्रान्तजीवितम्।
किं चिरेणागतासीति रुषित्वेव तथा स्थितम्॥ १११॥
एतावदुक्त्वा [7]मूर्च्छाधिं स्ववृत्तान्तमतः परम्।
विवक्षन्तीव सा कन्या निपपात शिलातले॥ ११२॥
प्रनष्टचेतनां चैनां चन्द्रापीडो[8]ऽवलोकयन्।
प्रश्नकारिणमात्मानं कृतागसममन्यत॥ ११३॥
ससंभ्रमं समुत्थाय कदलीदलमारुतैः।
तोयैश्च [9]शिशिरैस्स्वच्छैः संज्ञामेनामजिग्रहत्॥ ११४॥
[10]अवाप्य चेतनामेषा स्मृत्वा तद्व्यसनं निजम्।
[11]तदेवानुभवन्तीव रुरोद विललाप च॥ ११५॥
तरूणामप्यभज्यन्त हृदयानि [12]तदा शुचा।
[13]प्रतिशब्दनिभेनोच्चैः ककुभोऽप्यरुदन्निव॥ ११६॥

---

१. 'अधिकज्वरा' क. २. 'शून्यीकृत्य' क. ३. 'अहो' क. ४. 'कलापकं चतुर्भिः' ख. ५. 'प्रकम्पमानाङ्गी विसंष्ठुल' ख. ६. 'तत्क्षणात्क्रान्त' क. ७. 'मूर्च्छार्ता' क. ८. 'व्यलोकयत्' ख. ९. 'शिशिरैः' ख. १०. 'अवाप्तचेतना चासौ' ख. ११. 'तथैव' क. १२. 'यतस्तदा' क. १३. 'प्रतिशब्देन चैवोच्चैर्दिशोऽपि रुरुदुश्चिरम्' ख.

चन्द्रापीडोऽथ तामाह [1]बाष्परुद्धविलोचनः ।
आस्तां न शक्यते वक्तुं श्रोतुं [2]चान्यदतः परम् ॥ ११७ ॥

कथमप्युपसंहृत्य शोकावेगं तु सावदत् ।
किमतः परमस्त्यन्यद्वाच्यं श्रोतव्यमेव [3]वा ॥ ११८ ॥

किं तु क्लेशाय [4]येनाशालेशेन हृतजीवितम् ।
राजपुत्र बिभर्मीदं तदाश्चर्यं ब्रवीमि ते ॥ ११९ ॥

तदा तस्यातितीव्रस्य [5]दुःखभारस्य [6]तादृशी ।
न काचिन्मरणादन्या मयाग्राहि प्रतिक्रिया ॥ १२० ॥

मरणव्यवसाय[7]निश्चला कृतवत्यस्मि च संविधानकम् ।
निरियाय च चन्द्रमण्डलात्पुरुषः कोऽपि हिमोपमद्युतिः ॥ १२१ ॥

सोऽवतीर्य गगनान्[8]महीतले तं निधाय भुजपञ्जरान्तरे ।
उत्पतन्दिवम्[9]उदारया गिरा मामवोचत पितेव सान्त्वयन् ॥ १२२ ॥

विरम [10]मरणोद्योगादस्मात्प्रियेण तवामुना
पुनरपि महाश्वेते वत्से भविष्यति संगमः ।
इति गिरमहं तस्माच्छ्रुत्वा ससंभ्रम[11]विस्मया
किमिदमिति तं तत्राप्राक्षं प्रसृत्य कपिञ्जलम् ॥ १२३ ॥

प्रियसखमपहृत्य क्वाधुना गच्छसीति
स्फुरितविकटकोपाटोप[12]मुक्तोर्ध्वदृष्टिः ।
मम वचनमदत्त्वा किंचिदेवातिवेगा
कृतपरिकरबन्धः सोऽप्यगाद[13]न्तरिक्षम् ॥ १२४ ॥

[14]पश्यन्त्यां मयि ते त्रयोऽपि विविशुः शीतत्विषो मण्डलं
तत्संप्रत्ययसंहृतोचितविधिः [15]सोऽहं श्रितेदं व्रतम् ।

---

१. 'बाष्पैः' क. २. 'वा' ख. ३. 'च' ख. ४. 'आशाबन्धेन' ख. ५. 'दुःखदावस्य' ख. ६. 'तादृशः' ख. ७. 'निश्चयं' ख. ८. 'महीतलं' क. ९. 'उदात्तया' ख. १०. 'मरणोपायात्' ख. ११. 'विस्मयात्' क. १२. 'मुक्तार्द्र–' क. १३. अन्तरिक्षे' क. १४. 'प्रत्यक्षं' ख. १५. 'सास्मि' ख.

तातेनैत्य ततः प्रभृत्यहमिहासीनार्थं[1] नेतुं गृहं
यत्नेनापि न पारितेति सुचिरं[2] स्थित्वा गतः स्वान्गृहान् ॥१२५॥

इति श्रीविपश्चिद्वराग्रगण्याचार्यभट्टश्रीजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

इत्यावेदितनिर्व्याजनिजवृत्तान्त[3]विस्तरा ।
विरराम महाश्वेता निःश्वासग्लपिताधरा ॥ १ ॥
चन्द्रापीडस्तु तद्ध्यायन्मनोभवविजृम्भितम् ।
सकम्पविस्मयोऽप्यन्तस्तामवोचत[4] सान्त्वयन् ॥ २ ॥
मया ते[5] चिरवृत्तोऽपि परिणाममपश्यता ।
शोकः प्रत्यग्रतां नीतः कौतुका[6]विष्टचेतसा ॥ ३ ॥
सा त्वमर्हसि कल्याणि न शोकं कर्तुमीदृशम् ।
[7]आश्वासितासि देवेन नूनं चन्द्रमसा स्वयम् ॥ ४ ॥
कोऽन्यस्तथाविधाकारस्तच्छक्तिर्मण्डलात्ततः ।
निर्गत्य तत्रैव विशन्निशि संभाव्यते नरः ॥ ५ ॥
श्रूयन्ते गतयश्चित्रा देवतानामनेकशः ।
वर[8]शापतपःशक्तियोगवैचित्र्यनिर्मिताः ॥ ६ ॥
श्वेतकेतुश्च तस्यास्ते[9] प्रजापतिसमः पिता ।
नास्त्येव तस्य तपसाम[10]साध्यं नाम किंचन ॥ ७ ॥
इत्यादियुक्त्युपन्यासैरितिहा[11]सनिदर्शनैः ।
महाश्वेतां समाश्वास्य पुनः पप्रच्छ तामसौ ॥ ८ ॥
सा ते तरलिका नाम विस्रम्भनिभृता सखी ।
गता भगवति क्वाद्य नहि सा त्वां विमुञ्चति ॥ ९ ॥

---

१. 'एवं' ख. २. 'स चिरं' क. ३. 'वृत्तान्तबहुविस्तरा' ख. ४. 'अथोवाच' ख. ५. 'तव मनोवृत्तेः' क. ६. 'कौतुकाक्षिप्त' क. ७. 'आश्वासिता तदा तेन' क. ८. 'दान' क. ९. 'असौ' क. १०. 'अवश्यं' ख. ११. 'इतिहासैः' ख.

[1]अथोवाच महाश्वेता कासौ याति तपस्विनी ।
शृण्वत्रापि निमित्तं मे यथा [2]सा प्रहिता मया ॥ १० ॥
यः [3]स चित्ररथो नाम गन्धर्वाधिपतिर्मया ।
वर्णितो येन देवोऽयं प्रत्यक्षापि महेश्वरः ॥ ११ ॥
[4]येन खानितमत्यच्छमच्छोदाख्यमिदं सरः ।
येन चैत्ररथं नाम कृतमेतच्च काननम् ॥ १२ ॥
[5]तस्यामृतसमुद्भूते प्रसूताप्सरसां कुले ।
महिषी मदिरा नाम जीवितादपि वल्लभा ॥ १३ ॥
तयोः कादम्बरी नाम कन्यास्ति नवयौवना ।
लक्ष्मीमुपहसन्तीव रूपलावण्यविभ्रमैः ॥ १४ ॥
तया सह महत्प्रेम बाल्यात्प्रभृति मे तथा ।
यथैकमेव जानाति जनो जीवितमावयोः ॥ १५ ॥
विदित्वा दग्धवृत्तान्तमिमं सपदि मामकम् ।
साग्रहीन्नियमं बाला वार्यमाणापि बन्धुभिः ॥ १६ ॥
महाश्वेता[6]स्य दुःखस्य यावन्न लभतेऽवधिम् ।
तावन्मया न [7]कर्तव्यं पाणिग्रहणमात्मनः ॥ १७ ॥
[8]अतो यथायथा तस्या यौवनश्रीर्विजृम्भते ।
[9]तथातथा ततो धत्ते खेदं चित्ररथः परम् ॥ १८ ॥
संदिष्टं तेन मे पुत्रि यतस्वावहिता तथा ।
यथेमं दुर्ग्रहग्रन्थिं विमुञ्चति तव स्वसा ॥ १९ ॥
[10]अतस्तरलिका तत्र मया प्रकरणोचितम् ।
प्रहिता वहु संदिश्य श्वः [11]आगन्तेह सा पुनः ॥ २० ॥
इतीत्थं कथया नीत्वा महाश्वेताश्रमे दिनम् ।
चन्द्रापीडः प्रयातेऽस्तमर्के संध्याविधिं व्यधात् ॥ २१ ॥

---

१. 'पृष्टोवाच' ख. २. 'असौ' ख. ३. 'च' ख. ४. 'येनाखानि तदत्यच्छ—' क. ५. 'यस्यामृतात्समुत्पन्ने' ख. ६. 'स्वदुःखस्या' ख. ७. 'सोढव्यं' ख. ८. 'यतो' ख. ९. 'ततस्तथा तथा खेदं धत्ते' ख. १०. 'ततः' ख. ११. 'आगच्छयेव' ख.

तत्रेन्द्रायुधमानीय संयम्य निचुले क्वचित् ।
महाश्वेतोदिते देशे पर्णशय्यामकल्पयत् ॥ २२ ॥
[1]तस्यां तस्य निषण्णस्य श्रान्तस्यापि [2]यथाश्रुताम् ।
कथामाश्चर्यबहुलां तामेव ध्यायतश्चिरम् ॥ २३ ॥
[3]पुनश्चिन्तयतः सेनां वैशम्पायनमेव च ।
पत्रलेखां च सा रात्रिर्गता प्रायेण जाग्रतः ॥ २४ ॥
इन्द्रायुधस्[4]तु बाष्पार्द्रौ महाश्वेतामुखे दृशम् ।
सप्रत्यभिज्ञमश्वोऽपि [5]भृशं मानुषव[6]द्दौ ॥ २५ ॥
प्रयातायां तु [7]यामिन्यां कृतप्राभातिकक्रिये ।
समाधेरुत्थितां बुद्ध्वा महाश्वेतां [8]तदन्तिकम् ॥ २६ ॥
चन्द्रापीडे प्रविष्टेऽथ नाति[9]दूरोदिते रवौ ।
सगन्धर्वकुमारासौ ततस्तरलिकाययौ ॥ २७ ॥
सा प्रविश्य महाश्वेतां प्रणिपत्योपविश्य च ।
सिद्धार्थासीति तत्पृष्टा [10]वलितग्रीवमब्रवीत् ॥ २८ ॥
त्वत्संदेशं निशम्योक्तं यत्तया भर्तृदारिके ।
[11]तत्त्वं तच्छासनायातकेयूरकमुखाच्छृणु ॥ २९ ॥
अथ केयूरकः प्राह नानभिज्ञासि चेतसः ।
स्वस्य स्वमेव [12]चेदं ते मन्मनः किं परीक्षसे ॥ ३० ॥
[13]अथवा भूमिरस्याहमुपालम्भस्य भूयसः ।
तपोवननिवासिन्यां [14]त्वयि स्वगृहवर्तिनी ॥ ३१ ॥
आकर्ण्य तव संदेशव[15]चस्तरलिकामुखात् ।
एष ते प्रतिसंदेशः प्रियसख्या निवेदितः ॥ ३२ ॥

१. 'तस्य शय्यानिषण्णस्य' ख. २. 'यथातथा' ख. ३. 'पुनःपुनर्महाश्वेताम्' ख. ४. 'च वाहाम्यो' ख. ५. 'दृष्टिं' ख. ६. 'दधौ' क. ७. 'शर्वर्यां' ख. ८. 'तदन्तिके' ख. ९. 'दूरं गते' ख. १०. 'चलित–' ख. ११. 'तच्च तच्छासनाकारि' ख. १२. 'चेतस्ते' ख. १३. 'भूमिर्वैतादृशस्याहं' ख. १४. 'लब्ध्यहंगृहवासिनी' ख. १५. 'वाचः' क.

इति श्रुत्वा महाश्वेता क्षणं निश्चललोचना ।
चिन्तयित्वा किमप्यन्तश्चन्द्रापीडमभाषत ॥ ३३ ॥
राजपुत्र तवाकारः सदाचारश्च पेशलः ।
तनोति सर्वभावेन निःस्पृहाणामपि स्पृहाम् ॥ ३४ ॥
कादम्बरीवचश्चेदं श्रुतं केयूरकात्त्वया ।
तत्र को वा प्रतीकारः स्वयं मद्गमनादृते ॥ ३५ ॥
इतो न दूरे गन्धर्वराजधानी तदद्य ताम् ।
पश्यास्मदनुरोधेन श्वो गन्तासि स्ववाहिनीम् ॥ ३६ ॥
उदात्तमधुरामेतां दर्शयन्त्या तवाकृतिम् ।
बहु गन्धर्वलोकस्य मयाप्युपकृतं भवेत् ॥ ३७ ॥
चन्द्रापीडस्तु तां प्राह बहूक्त्वा भगवत्यलम् ।
अनतिक्रमणीयं मे मुनीनामपि शासनम् ॥ ३८ ॥
प्रावर्तत ततो गन्तुं स महाश्वेतया सह ।
पथ्यामेव नियुज्याश्वं प्रति केयूरकं दृशा ॥ ३९ ॥
केयूरकोऽग्रतो गत्वा कादम्बर्यै न्यवेदयत् ।
तस्यागमनमाकारं गुणांश्चाहितविस्मयान् ॥ ४० ॥
स गत्वा किंचिदध्वानं चन्द्रापीडः समासदत् ।
गन्धर्वराजनगरीमपराममरावतीम् ॥ ४१ ॥
आसाद्य राजधानीं च तुङ्गस्फटिकतोरणाम् ।
सप्त कक्षा अतिक्रम्य कन्यान्तःपुरमभ्यगात् ॥ ४२ ॥
केयूरकोपदिष्टेन वर्त्मनाथ प्रविश्य सः ।
भास्वन्मणिमयस्तम्भं श्रीमण्डपमलोकयत् ॥ ४३ ॥
तन्मध्ये मणिपर्यङ्कमध्यासीनां महीयसा ।
रत्नाभरणचित्रेण स्त्रैणेन परिवारिताम् ॥ ४४ ॥

---

१. 'चिरं' ख. २. 'अवोचत' ख. ३. 'तवोदारो समाचारश्च' ख. ४. 'भावेषु' क. ५. 'त्वदाकृतिम्' ख. ६. 'न्ययुङ्क्ताश्वं' क. ७. 'गत्वा कथंचिदध्वानं' ख. ८. 'कक्ष्या' क. ९. 'मरकत' ख.

देहप्रभावितानेन रत्नकान्त्यभिभाविना ।
[1]प्रतप्तकनकोद्द्योतधौता विदधतीं दिशः ॥ ४५ ॥
तटस्थमप्यार्द्रयतः [2]सदाचारमभिन्दतः ।
स्थितां नवस्य लावण्यसिन्धोर[3]न्तस्तरङ्गिणः ॥ ४६ ॥
[4]सर्वोपमेयभावानामुपमानत्वमागताम् ।
कादम्बरीं ददर्शासौ दूरविस्फारितेक्षणः ॥ ४७ ॥ ([5]चक्कलकम्)
परातिशयको[6]टिस्थरूपलावण्यसंपदम् ।
तस्यां निरूपयन्नन्तर[7]चिन्तयदथ क्षणम् ॥ ४८ ॥
सत्यं न कश्चिदाश्चर्यनिर्माणेष्ववधिर्विधेः ।
ईदृशान्यपि रत्नानि स्रष्टुं प्रभवति [8]स्म यः ॥ ४९ ॥
मोघं याति हरेः कालो लक्ष्मीं वक्षसि बिभ्रतः ।
देहार्धेन [9]वहन्गौरीं वञ्चितश्चन्द्रशेखरः ॥ ५० ॥
कृतमक्ष्णां सहस्रेण निर्निमेषेण वज्रिणः ।
अनन्यकर्मणा येन नित्यमेषा न दृश्यते ॥ ५१ ॥
इत्यादिचिन्तयत्यस्मिन्नथ चित्ररथात्मजा ।
[10]प्रत्युद्ययौ महाश्वेतामभ्युत्थाय ससंभ्रमम् ॥ ५२ ॥
महाश्वेता [11]तु निःशङ्कमालिङ्ग्य स्नेहनिर्भरम् ।
तां चन्द्रापीडनिर्देशपुरःसरमभाषत ॥ ५३ ॥
अयं हि भारते वर्षे सार्वभौमस्य भूपतेः ।
तारापीडस्य तनयश्चन्द्रापीड इहागतः ॥ ५४ ॥
अनेनेह प्रविष्टेन दृष्टेर्विषयवर्तिना ।
भवत्वखिलगन्धर्वकुटुम्बकमहोत्सवः ॥ ५५ ॥
अथ कादम्बरी तस्मिन्पक्ष्मोत्क्षेपवि[12]कासिनीम् ।
आकर्णप्रसृतापाङ्गां चिरं [13]दृशमपातयत् ॥ ५६ ॥

१. 'उत्तप्तकनकद्योत–' ख. २. 'स्वमाधारमसिंचतः' ख. ३. 'रत्नतरङ्गिणीम्' ख. ४. 'सर्वोपमान' क. ५. 'चतुर्भिः कालापकम्' ख. ६. 'कोटिस्थां' ख. ७. 'चिन्तयामास' ख. ८. 'स्वयम्' ख. ९. 'दधद्' ख. १०. 'प्रत्यागच्छत्' ख. ११. 'अथ निःसंगं' क. १२. 'विलासिनीम्' क. १३. 'दृष्टिं' ख.

द्वारेण विवृतेनाथ तेनैव निजमायया ।
मदनोऽन्तः प्रविश्यास्या बबन्ध हृदये पदम् ॥ ५७ ॥

रत्नपीठोपविष्टे तु[1] चन्द्रापीडे तदन्तिके ।
[2]अध्यासातां कथामेकां हंसचित्ररथात्मजे ॥ ५८ ॥

लज्जास्तिमितमासीनाम[3]थ कादम्बरीं बलात् ।
महाश्वेता गृहाचारं चन्द्रापीडे न्य[4]घापयत् ॥ ५९ ॥

शरीरनिर्विशेषास्याः कादम्बर्याः प्रिया सखी ।
मदलेखाभिधानास्य चरणक्षालनं व्यधात् ॥ ६० ॥

कादम्बरी तु सखेद[5]प्रकम्पिकरपल्लवा ।
ताम्बूलच्छद्मनात्मानं स्वयमस्मै न्यवेदयत् ॥ ६१ ॥

तदङ्गुलितलस्पर्श[6]माधुर्यहृतमानसा ।
नालक्षयत सा रत्नवलयं [7]स्खलितं करात् ॥ ६२ ॥

चन्द्रापीडोऽपि तत्पाणिसं[8]स्पर्शसुखसंपदा ।
तदा त्रिभुवनाधीशमिवात्मानममन्यत ॥ ६३ ॥

ततस्तू[9]ष्णीमुपासीने सर्वस्मिन्कन्यकाजने ।
शुकसारिकयोरासीत्[10]कलहः केलिकारणम् ॥ ६४ ॥

तत्प्रसङ्गे च सो[11]त्प्रासं तयोः कलहवृद्धये ।
चन्द्रापीडोऽब्रवीद्येन सर्वा [12]जहसुरङ्गनाः ॥ ६५ ॥

ताश्च दन्तप्रभाधौतदिङ्मुखा मधुरस्वराः ।
चन्द्रापीडगिरो जह्रु[13]स्तरां कादम्बरीमनः ॥ ६६ ॥

[14]क्षणमात्रे व्यतीतेऽथ प्रविश्य प्राह कञ्चुकी ।
राजपुत्र्यौ युवां द्रष्टुं देवी निर्विघ्नमिच्छति ॥ ६७ ॥

---

१. 'च' क. २. 'अध्यासिषातामेकत्र' ख. ३. 'साथ' क. ४. 'व्यदापयत्' ख. ५. 'प्रकम्प' ख. ६. 'विश्रान्तिहृत' क. ७. 'प्रच्युतं' ख. ८. 'तलसंस्पर्शमात्रया' ख. ९. 'तूष्णीमथ तदासीने' ख. १०. 'केलिः कलहकारणम्' ख. ११. 'सोत्प्रासं' क. १२. 'तुतुषुः' ख. १३. 'तदा' ख. १४. 'क्षणं प्रविश्य तत्स्थानं मधुरं प्राह' ख.

क्रीडापर्वतके कृत्वा सुतारमणिमन्दिरे ।
[1]चन्द्रापीडं सुखासीनमायातं मातुर[2]न्तिकम् ॥ ६८ ॥
तत्राध्यासितपर्यङ्कं केयूरकपुरःसराः ।
मुख्याः कादम्बरीसख्यश्चन्द्रापीडं सिषेविरे ॥ ६९ ॥
स्नानानुलेपनाहारक्रियाः [3]स तदुपाहृतैः ।
चक्रेऽ[4]मर्त्यपुरप्राप्यैर्विभवैरुपपादिताः ॥ ७० ॥
अथ मन्दप्रभे भानौ भेजे कादम्बरी निजम् ।
मदलेखाद्वितीयैव महाप्रासादमस्तकम् ॥ ७१ ॥
चन्द्रापीडं च तत्रस्था क्रीडापर्वतवर्तिनम् ।
निरवर्णयदाकर्णप्रसृतापाङ्गया दृशा ॥ ७२ ॥
चन्द्रापीडे [5]तदा तस्याः कटाक्षास्तीक्ष्णकोटयः ।
समं निपेतुस्[6]तस्यां च कुसुमायुधसायकाः ॥ ७३ ॥
कटाक्षैरुपनीतं च [7]क्षिप्रं कृतसमागमैः ।
तल्लावण्यं पिबन्तीव मदलेखामुवाच सा ॥ ७४ ॥
न मया मदनो नाम कथास्वपि [8]सखि श्रुतः ।
अद्य प्रत्यक्षतो दृष्टः स चन्द्रापीडविग्रहः ॥ ७५ ॥
न महाश्वेतया किंचिदुक्तं प्रकृतवस्तुनि ।
[9]अथ चेहानयन्त्या[10]मुं सर्वमुक्तमनक्षरम् ॥ ७६ ॥
अपि नाम [11]विकारो मे तदानीं लक्षितस्तया ।
किं वा न [12]लक्षयेदेषा दृष्टमन्मथविक्रिया[13] ॥ ७७ ॥
अद्यापि निजसंकल्पविरुद्धां [14]विक्रियामिमाम् ।
मनसः संहराम्येव स्थूलामपि यथातथा ॥ ७८ ॥

---

१. 'चन्द्रापीडसुखावासमायाता' ख. २. 'अन्तिके' ख. ३. 'च तदुपाहृताः' ख. ४. 'शक्रपुरात्प्राप्तैः' ख. ५. कटाक्षाश्च तदीयाः' क. ६. 'अस्यां' क. ७. 'तीव्रं' ख. ८. 'स विश्रुतः' ख. ९. 'अथवा' ख. १०. 'तु' ख. ११. 'तदा नासौ प्रकारो' क. १२. 'लक्षयति' ख. १३. 'विभ्रमा' ख. १४. 'प्रक्रियां' क.

किं [1]त्वसौ शेषहारोऽस्यास्तुल्यं मण्डनमाकृतेः ।
उरस्यनिच्छतोऽप्यस्य [2]तूर्णमामुच्यतां त्वया ॥ ७९ ॥
मदलेखा गृहीत्वा तं हारं गत्वा तदन्तिके ।
तथोवाच यथा [3]तेन प्रत्युक्ता सा न किंचन ॥ ८० ॥

आमुच्यत ततः कण्ठे हारोऽस्य मदलेखया ।
शरदिन्दुकरोदारप्रभा[4]पूरितदिङ्मुखः ॥ ८१ ॥
चन्द्रापीडश्च हारेण रराज कृतमण्डनः ।
पूर्णेन्दुरिव नक्षत्रकलापपरिवारितः ॥ ८२ ॥

कादम्बरी चिरं त्वेनमवलोक्य निशागमे ।
प्रासादशिखरात्तस्मा[5]न्मन्दमन्दमवातरत् ॥ ८३ ॥
उत्थाय चन्द्रापीडोऽथ कृतसंध्याविधिस्ततः ।
[6]अवालम्बत देहेन शय्यां चिन्तां च चेतसा ॥ ८४ ॥

किं स्युर्गन्धर्वकन्याया विलासाः सहजा इमे ।
उ[7]तेमं जनमुद्दिश्य बालां नर्तयति स्मरः ॥ ८५ ॥
दृष्टिर्निपुणदूतीव [8]यथा त्वस्या विचेष्टते ।
[9]तथा संभावनाहीयं मम चेतसि वर्तते ॥ ८६ ॥

[10]अवैमि पुष्पितस्तावत्किंनरानुस्मृतिक्रमः ।
स कालपरिणामेन न जाने किं फलिष्यति ॥ ८७ ॥
अथवा यौवनोन्मादकृत [11]एष मम भ्रमः ।
[12]क्व मनुष्यः क्व गन्धर्व इति किं तेन संगतम् ॥ ८८ ॥

आत्मसंभावनां चेयमास्तामसदृशक्रमा ।
कालेन व्यज्यते सर्वं कथं [13]च मम सैनिकाः ॥ ८९ ॥

---

१. 'पुनः' क. २. 'त्वरितं प्रथ्यतां' क. ३. 'अनेन' ख. ४. 'प्लावित-' ख. ५. 'खेदमन्दं' क. ६. 'युवालम्बत' क. ७. 'अथेमं' ख. ८. 'तथा तस्या व्यचेष्टत' क. ९. 'यथा संभावनान्यैव' क. १०. 'दृश्यते पुष्पितस्तावत्किमनङ्ग इति द्रुमः' ख. ११. 'एव' ख. १२. 'क्व मनुष्याः क्व गन्धर्वा बत किं केन' ख. १३. 'तु' क.

इति चिन्तयतस्तस्य निद्रा सुचिरसंभृता ।
चकार मुकुलाकारे [1]चक्षुषी आ निशात्ययात् ॥ ९० ॥
अपरेद्युरथोत्थाय कृत[2]प्राभातिकक्रमः ।
कादम्बरीमहाश्वेते दृष्ट्वा [3]लब्ध्वा चिरादिव ॥ ९१ ॥
[4]तदनुज्ञां तदादिष्टगन्धर्वपरिवारितः ।
स इन्द्रायुधमारुह्य प्रतस्थे पृतनां प्रति ॥ ९२ ॥ (युगलकम्)
अथ केनाप्युपायेन [5]लब्धमार्गमसौ निजम् ।
संनिविष्टं [6]सरस्तीरे स्कन्धावारं व्यलोकयत् ॥ ९३ ॥
[7]तत्र दृष्ट्वा नृपान्सर्वान्मन्त्रिपुत्रं रहस्यसौ ।
स्ववृत्तान्तविदं चक्रे पत्रलेखां विशेषतः ॥ ९४ ॥
निशि तस्यामतीतायामन्येद्युरुदिते रवौ ।
केयूरकस्त[8]मागत्य हेमकूटाद[9]भाषत ॥ ९५ ॥
कादम्बरी [10]नं पद्वीति त्वामभीक्ष्णं दिदृक्षते ।
विस्मृतं शयनीये च शेषहारमुपाहरत् ॥ ९६ ॥
के[11]यूरकवचः श्रुत्वा [12]समेतः पत्रलेखया ।
चन्द्रापीडः पुनस्तूर्णं हेमकूटमथागमत् ॥ ९७ ॥
[13]अभिवन्द्य महाश्वेतां श्लाघितागमनस्तया ।
कादम्बरीमथापश्यत्पत्रलेखापुरःसरः ॥ ९८ ॥
उद्याननलिनीतीर[14]कल्पिते हिममन्दिरे ।
कदलीदलशय्यान्तर्निषण्णां म्लानविग्रहाम् ॥ ९९ ॥
तदालोकनमात्रेण मुहुराश्वासितेव सा ।
तत उत्थातुमिच्छन्ती शयानैवास्त तद्गिरा ॥ १०० ॥
ततः कुशलसंप्रश्नसुखमात्रपवित्रिताः ।
नानानर्मविलासार्द्राः प्रावर्तन्त तयोर्गिरः ॥ १०१ ॥

---

१. 'अक्षिणी' ख. २. 'संध्याविधिक्रमः' ख. ३. 'लब्धे' ख. ४. तदनुज्ञासमादिष्ट' ख. ५. 'लब्ध्वा' क. ६. 'नदीतीरे' ख. ७. 'तदा' ख. ८. 'समागत्य' ख. ९. 'अथाब्रवीत्' ख. १०. 'नरपते' ख. ११. 'केयूरवचनं' क. १२. 'संगतः' ख. १३. 'अभिनन्द्य' क. १४. 'पार्श्वकल्पिते' ख.

[1]तथा तत्र चिरं स्थित्वा तां तथावशव[2]र्तिनीम् ।
भङ्गीभणितिभिर्व्यक्तमावेद्य निज[3]माशयम् ॥ १०२ ॥
तदभ्यर्थनयादिश्य पत्रलेखां तदन्तिके ।
केयूरकद्वितीयोऽसौ जगाम कटकं पुनः ॥ १०३ ॥
[4]तत्रोज्जयिन्याः संप्राप्तं पूर्वे[5]द्युर्लेखहारकम् ।
अवलोक्य तदानीं तं लेखं स्वयमवाचयत् ॥ १०४ ॥
पितुराज्ञां ततो ज्ञात्वा शीघ्रागमनशंसिनीम् ।
केयूरककरे न्यस्य तं लेखं कूणितेक्षणः ॥ १०५ ॥
तदर्थमथ संमन्त्र्य सह मन्त्रिसुतेन सः ।
एवमेतदिति [6]ध्यायन्प्रस्थानस्थैर्यमग्रहीत् ॥ १०६ ॥

सत्यं वच्मि भवत्प्रसादरसिकं चेतो ममैतत्[7]परं
　गन्तुं नेच्छति किंतु शासनमिदं नोल्लङ्घनीयं गुरोः ।
मन्युः संप्रति सह्यतां पुनरिहागन्तास्मि कादम्बरीं
　संदिश्येति सबाष्पगद्गदमसौ केयूरकं प्राहिणोत् ॥ १०७ ॥
वैशम्पायनमभ्यभाषत भवान्संवाहयन्वाहिनीं
　पश्चादेष्यति यामि सत्वरमहं स्वल्पैरितो वाजिभिः ।
निश्चित्येति [8]तदा प्रयाणपटहे दत्ते प्रतस्थे ततो
　गत्वा किंचन चण्डिकाश्रमत[9]टीमध्यास्त तस्मिन्दिने ॥ १०८ ॥

तत्रोद्धतद्रविडधार्मिकरूपवेष-
　भाषात[10]पश्चरणसिद्धिकथाविनोदैः ।
नीत्वा निशां सततमस्खलितप्रयाणैः
　[11]स्वल्पैर्दिनैस्त्वरितमुज्जयिनीमवाप ॥ १०९ ॥

इति श्रीविपश्चिद्वराग्रगण्याचार्यभट्टश्रीजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे पञ्चमः सर्गः ।

---

१. 'तत्रतत्र' ख. २. 'वर्तिनम्' ख. ३. 'निरगादयम्' क. ४. 'ततोज्जयिन्याः' ख. ५. 'अन्येद्युः' ख. ६. 'ध्यात्वा प्रस्थाने' क. ७. 'परं' ख. ८. 'तथा' क. ९. 'महीं' ख. १०. 'तपःप्रशमसिद्ध' क. ११. 'अल्पैः' क.

षष्ठः सर्गः ।

अथ प्रविश्य नगरीमुपास्य पितरौ चिरम् ।
शुकनासं च सोऽध्यास्त कुमारभवनं पुनः ॥ १ ॥
तत्र कादम्बरीध्याननिरतैकाग्रचेतसः ।
बभूव रतये [1]नास्य किंचित्स्थास्नु चरिष्णु च ॥ २ ॥
नाकरोत्प्रियमाहारं नाबोधि मधुरं रसम् ।
न चाद्रियत वासांसि [2]न सिषेवे विलेपनम् ॥ ३ ॥
सार्थच्युत [3]इवाध्वन्यो यूथभ्रष्ट इव द्विपः ।
वागुरापाशसं[4]रुद्ध इव सारङ्गशावकः ॥ ४ ॥
दिवा विभावरीं ध्यायन्निशि वाञ्छन्[5]दिनागमम् ।
उदीचीमेव सास्राक्षो वीक्षमाणोऽनिशं दिशम् ॥ ५ ॥
[6]केयूरकादिहायातं ज्ञात्वा मां किं भजेदसौ ।
किं वदेत्पत्रलेखां वा सापि किं वोच्यते तया ॥ ६ ॥
इति नक्तंदिनं ध्याय[7]न्ननवापितनिर्वृतिः ।
कालं कियन्तमप्येवं चन्द्रापीडोऽत्यवाहयत् ॥ ७ ॥
[8]आकारः संवृतस्त्वीदृगस्य गूढात्मनोऽभवत् ।
यथा तां शून्यतां [9]तस्य पितरौ नाधिजग्मतुः ॥ ८ ॥
दिनेष्वथ व्यतीतेषु पत्रलेखा तदन्तिकम् ।
प्रापद्बलाहकाश्वीयनिर्वृत्त[10]पथसौष्ठवा ॥ ९ ॥
चन्द्रापीडो[11]ऽपि तां दृष्ट्वा [12]समुच्छ्वसितमानसः ।
कादम्बरीमिवामंस्त पस्पर्श च मुहुर्मुहुः ॥ १० ॥
[13]अथ विस्रब्धमप्राक्षीद्वद कादम्बरीकथाम् ।
किमस्माकं स्मरत्येषां [14]हर्षितेहागमेन किम् ॥ ११ ॥

१. 'किंचिन्नास्य' ख. २. 'न च स्पर्शविलेपनम्' ख. ३. 'अध्वन्यो' क. ४. 'संबद्ध' ख. ५. 'दिवागमम्' ख. ६. 'केयूरकोदितं मां च ज्ञात्वा किं चिन्तयेदसौ' ख. ७. 'अलब्धधृतिबन्धनः' ख. ८. 'आकारसंवृतिस्तादृग्' ख. ९. 'अस्य' ख. १०. 'पथि' क-ख. ११. 'अथ' ख. १२. 'समुल्लासित' ख. १३. 'ततो' ख. १४. 'हर्षितागमनात्कियत्' ख.

साभ्यसूयमिवालोक्य चन्द्रापीडमुवाच सा ।
किमेतै[1]श्चिन्तया देव गुरूनाराधय स्थिरम् ॥ १२ ॥
असौ हि[2] सुप्रसन्नेन स्वयं मकरकेतुना ।
त्वय्यर्पिता विधिवशाच्छ्रीपतौ श्रीरिवाब्धिना ॥ १३ ॥
[3]तां चाभिनवभावार्द्रां बालां [4]तरुलतामिव ।
तीव्रे विरहदावाग्नौ क्षिप्तवानसि किं [5]वृथा ॥ १४ ॥
केयूरकमुखाद्बुद्ध्वागमनं देव तावकम् ।
[6]वज्राशनिहता शालिवल्लरीव व्यकम्पत ॥ १५ ॥
लब्धस्थैर्यावदन्मां च पत्रलेखे किमीदृशम् ।
युक्तमेतस्य यन्मन्ये रक्षांस्यपि न कुर्वते ॥ १६ ॥
ततः प्रभृति निःश्वासैर्वर्धमानैर्दिनैरिव ।
[7]क्रान्ता ग्रीष्मनिशेवासावक्षीयत शनैः शनैः ॥ १७ ॥
अलब्धकुसुमामोदाः प्रा[8]गभ्यासादुपागताः ।
दूरात्परिहरन्त्यस्याः कबरीमद्य षट्पदाः ॥ १८ ॥
रोदनारुणितापाङ्गे चिरं विस्मृतकज्जले ।
नेत्रे [9]माधुर्यमुत्सृज्य गते तस्याः कषायताम् ॥ १९ ॥
[10]चिरं पत्रलताले[11]ख्यं विहाय क्रियते नवम् ।
मण्डनं गण्डयोरश्रुकणमुक्तावली तया ॥ २० ॥
मृत्युः स्वभावरक्तश्च [12]प्रवृद्धैरसमोष्मभिः ।
म्लानिमानीयते तस्या निःश्वासैरधरः [13]खरैः ॥ २१ ॥
स्तनौ च[14] विरहे तस्या शोकान्तर्हि बहिष्कृतौ ।
दाहप्रतिक्रिया[15]भ्यस्तैर्हारकर्पूरचन्दनैः ॥ २२ ॥

---

१. 'किं तया' ख. २. 'किं' ख. ३. 'मां' ख. ४. 'तनु' ख. ५. 'कृते' ख. ६. 'वज्रसंनिहिता साल-' ख. ७. 'क्लान्ता सीम' ख. ८. 'अभ्यासक्रमागताः' ख. ९. 'विसृष्टमाधुर्ये' ख. १०. 'चित्र-' ख. ११. 'लेख्ये' ख. १२. 'प्रवृद्धरससोष्मभिः' ख. १३. 'खलैः' ख. १४. 'तु विरहेऽप्यस्याः' ख. १५. 'न्यस्तैः' ख.

विरहज्वलनस्त[1]स्या लावण्य[2]रसनिर्झरैः ।
वाडवश्चाग्निना नैति शममित्यद्भुतद्वयम् ॥ २३ ॥
मुहुः सरसि हंसीव मृगीवोपवने मुहुः ।
पुलिने चक्रवाकीव मुहुर्लुठति विह्वला ॥ २४ ॥
मुहुर्भवन्तमालिङ्ग्य पु[3]रः संकल्पकल्पितम् ।
शून्ये भुजलते वीक्ष्य विलक्षा पतति क्षितौ ॥ २५ ॥
मा गादयमुपालब्धः संकल्पादपि दूरतः ।
इत्युपालभते न त्वां भीतेर्वै[4] मनसापि सा ॥ २६ ॥
त्वदाकारमयं ध्या[5]नं त्वद्गोत्रप्रवणा गिरः ।
त्व[6]द्गात्रकीलिता दृष्टिस्तस्याः संप्रति वर्तते ॥ २७ ॥
किय[7]ती वर्ण्यते तस्याः परेण विरहव्यथा ।
स्वसंवेदनगम्या हि सा तथैवानुभूयते ॥ २८ ॥
किमप्याख्यातुकामेव बहुशः स्फुरिताधरा ।
हृदयस्थेन केनापि गुरुणेव निषिध्यते ॥ २९ ॥
भूमौ विवे[8]ष्टमानाङ्गी भुजंगीव क[9]दाप्यसौ ।
दिशो वीक्ष्य मदुत्सङ्गे निधाय मुखमब्रवीत् ॥ ३० ॥
[10]उत्तिष्ठानय तं गत्वा जीवन्तीं मां यदीच्छसि ।
अहं ग[11]न्तुमशक्ता हि सुदूरमिदमन्तरम् ॥ ३१ ॥
स्थितायां त्वयि जीवामि त्वत्स्पर्शेन यथा तथा ।
गतायां तु चिरं कालं न[12] सहन्ते ममासवः ॥ ३२ ॥
इति श्रुत्वा च[13] दृष्ट्वा च समायातास्म्यतः परम् ।
देवः प्रमाणमित्युक्त्वा रुदती विरराम सा ॥ ३३ ॥

---

१. 'नास्याः' क. २. 'जल' ख. ३. 'संकल्पविहितं पुनः' ख. ४. 'भीतेन' क. ५. 'चित्तं त्वन्नामस्मरणाः' ख. ६. 'त्वन्मार्गकल्पिता' ख. ७. 'कियद्वा' ख. ८. 'विचेष्ट' ख. ९. 'एकदा पुरः' ख. १०. 'उत्तिष्ठ यदि जीवन्तीं मामिच्छसि तमानय' ख. ११. 'नेतुमशक्या हि सुदूरमिव मन्दिरम्' ख. १२. 'क्षमन्वे मम नासवः' ख. १३. 'तु तां दृष्ट्वा' ख.

चन्द्रापीडस्तदाकर्ण्य [1]गतस्मृतिरिवाभवत् ।
लब्धस्मृ[2]तिश्चिरं दध्यौ गमने हेतुमात्मनः ॥ ३४ ॥
दिने[3]ष्वथ व्यतीतेषु वक्तुं कादम्बरीदशाम् ।
आगात्केयूरकोऽप्याशु दीर्घाध्वश्रान्तवाहनः ॥ ३५ ॥
स चोज्जयिन्या विभवं प्रविशन्वीक्ष्य विस्मितः ।
स्थाने ननु मनो लग्नं स्वामिन्या इत्यमन्यत ॥ ३६ ॥
प्रविश्य ददृशे तेन चन्द्रापीडः [4]कृशाकृतिः ।
चक्रवाक इवैकाकी प्रियाविरहविह्वलः ॥ ३७ ॥
दधत्या पार्श्ववर्तिन्या चामरं पत्रलेखया ।
संवीज्यमानः [5]पर्यङ्कनिषण्णग्लानविग्रहः ॥ ३८ ॥
प्रणिपत्योपविष्टोऽसौ गाढं शिरसि पस्पृशे ।
कुर्वता कुशलप्रश्नं चन्द्रापीडेन सादरम् ॥ ३९ ॥
ततः कादम्बरीवार्तां पृष्टः केयूरकोऽमुना ।
पत्रलेखामुखं वीक्ष्य संक्षिप्तमिदमब्रवीत् ॥ ४० ॥
उक्तोऽसि नानया किंचिदुक्तश्चेत्किमिह [6]स्थितः ।
उक्तश्चेह स्थितश्चासि कृतमागमनेन मे ॥ ४१ ॥
तथापि वद संदेशमिति तेन तु चोदि[7]तः ।
पुनः केयूरकः [8]प्राह नहि वि[9]ज्ञप्यसे मृषा ॥ ४२ ॥
कथं जीवत्सु युष्मासु विरहो हन्ति मामिति ।
तस्याः साकूतया दृष्ट्या विसृष्टोऽस्मि न तद्गिरा ॥ ४३ ॥
किमत्र बहुनोक्तेन तथास्या विरहव्यथा ।
अद्यापि जीवतीत्य[10]त्र यथा दोलायते मनः ॥ ४४ ॥
तत्कथाभिस्तथा स्थित्वा तस्मिन्नथ दिने चिरम् ।
चन्द्रापीडः सुखावासं केयूरकमकारयत् ॥ ४५ ॥

---

१. 'जात' ख. २. 'स्थितिः' ख. ३. '[illegible]न्येषु जातेषु' ख. ४. 'यथाक्रमम्' ख. ५. 'पर्यङ्के निषण्णः क्षाम' ख. ६. 'आस्थि[illegible]ः' ख. ७. 'नोदितः' ख. ८. 'अथाह' ख. ९. 'विज्ञायसे' ख. १०. 'एवं' ख.

न राक्षसो न चाण्डालो[1] न किरातश्च यद्यहम्।
अच्छोदसरसस्तीरं प्राप्तं मां वेत्थ सर्वथा ॥ ४६ ॥

अन्येद्युरिति संदिश्य सहितं पत्रलेखया।
केयूरकमसौ रत्नैः[2] प्राहिणोत्कृतमण्डनम् ॥ ४७ ॥

तयोस्तु गतयोरास्त सुतरां खिन्नमानसः।
गमनाय[3] धिया किंचिन्निमित्तमनुसंदधत् ॥ ४८ ॥

शुश्रावाथ नियुक्तेभ्यः स्कन्धावारमुपागतम्।
योजनद्वयमात्रं[4] च पुनः कृतनिवेशनम् ॥ ४९ ॥

वैशम्पायनतो लप्स्ये किंचित्कारणमित्यसौ।
प्रत्युद्गन्तुम[5]गादेनं कटकं पितुराज्ञया ॥ ५० ॥

तत्र राजकमालोक्य बलाहकनिवेदितम्।
क्व वैशम्पायनावास इति सेनान्यमभ्यधात् ॥ ५१ ॥

बलाहकस्त्वधोदृष्टिरुल्लिखन्मेदिनीं मुहुः।
न वैशम्पायनोऽत्रेति[6] सन्नकण्ठमभाषत ॥ ५२ ॥

ततोऽवतीर्य तुरगादुपविश्य तरोरधः।
हा वयस्येति विलपन्प्रावर्तत स रोदितुम् ॥ ५३ ॥

बलाहको निपत्याथ चन्द्रापीडस्य पादयोः।
देव मैवं[8] कृथाः सोऽस्ति[7] जीवन्नेवेत्यवोचत ॥ ५४ ॥

चन्द्रापीडस्तु तं प्राह नैवं श्रद्धीयते मया।
न[9] वैशम्पायनो जीवन्मुहूर्तं मां विमुञ्चति ॥ ५५ ॥

इति संभ्रान्त[10]चित्तं तं पुनराह बलाहकः।
श्रूयतां देव तद्वृत्तं[11] यथासाविह नागतः ॥ ५६ ॥

१. 'मातङ्गो' ख. २. 'अग्रे' ख. ३. 'तांस्तानभिलषन्बुद्ध्या हेतून्गमनसाधकान्' ख. ४. 'मात्रेण पुरः' ख. ५. 'प्रत्युद्गतं' ख. ६. 'अस्ति' ख. ७. 'शोचं जीवन्नस्तीत्यभाषत' ख. ८. 'नेदं' ख. ९. 'स वैशंपायनो जीवन् त्यक्त्वालंबत मामिति' ख. १०. 'उपप्लुतचित्तं' ख. ११. 'यद्वृत्तं तत्र प्रचलिते त्वयि' ख.

देवं[1] तादृशमादिश्य प्रस्थितं त्वामनुव्रजन् ।
ततः प्रतिनिवृत्तोऽसौ तत्रैवास्त[2] यथास्थिति ॥ ५७ ॥

अपरेद्युरथोत्थाय विधाय[3] प्रकृताः क्रियाः ।
विनोदयितुमात्मानं स[4] चचार वनस्थलीः ॥ ५८ ॥

तत्र संप्रत्यभिज्ञानं[5] स्थानं स्थानं निरूपयन् ।
किंचिन्नष्टमिवान्वेष्टुमैच्छ[6]दुत्रस्तलोचनः ॥ ५९ ॥

ततोऽस्ताभिमुखे भानावस्माभिः सोऽभ्यधीयत ।
स्थीयतामद्य[7] शिष्टास्तु श्वो द्रष्टाऽसि वनस्थलीः ॥ ६० ॥

अथासौ[8] विचरन्नेव साभ्यसूयमिवावदत् ।
यात यूयं न गन्तव्यं यावज्जीवमितो मया ॥ ६१ ॥

स बहूनि दिनान्यास्त तत्रैव[9] विचरन्वने ।
नैनं[10] च केनाप्युपायेन शक्तश्चलयितुं ततः ॥ ६२ ॥

कृतप्रायोपवेशेन पादयोः पततानिशम्[11] ।
इयता राजचक्रेण नार्थितो[12]ऽप्यत्यजद्रहम् ॥ ६३ ॥

ततस्तत्र चिरं स्थित्वा कार्यशेषमपश्यता[13] ।
आयातमिह सैन्येन त्वं प्रमाणमतः[14] परम् ॥ ६४ ॥

इति श्रुत्वा निपतितः शोकविस्मयसंकटे ।
चन्द्रापीडस्तथैवास्त तरुमूले कृतासनः[15] ॥ ६५ ॥

अथ वार्तां विदित्वेमां[16] सामात्यान्तःपुरो[17] नृपः ।
अनपेक्षितवृत्तान्त[18]स्तमेवोद्देशमागमत् ॥ ६६ ॥

---

१. 'अस्मानेव समादिश्य' ख. २. 'आस्त तत्रैव' ख. ३. 'विहाय' क. ४. 'व्यचरत्स' ख. ५. 'सप्रत्यभिज्ञः सन्स्थानान्यनुरूपयन्' ख. ६. 'ऐक्षद्वित्रस्त' ख. ७. 'अवशिष्टास्तु ता द्रक्ष्यामो' ख. ८. 'तदासौ नाग्रहीद्वाक्यं विचरन्नेव चाब्रवीत्' ख. ९. 'तथैव' ख. १०. 'न सोऽस्त्युपायो येनासौ शक्य आनयितुं ततः' ख. ११. 'भृशम्' ख. १२. 'नाबुद्ध प्रार्थितोऽपि सः' ख. १३. 'अपश्यत' क. १४. 'ततः' ख. १५. 'कृताननः' क. १६. 'एनां' ख. १७. ख-पुस्तकेऽस्मिञ्श्लोके द्वितीयचतुर्थपादयोर्व्यत्ययः. १८. 'विस्तारः' ख.

तत्र क्षणमिव स्थित्वा स्वयं पृष्ट्वा[1] बलाहकम् ।
अधिक्षिपन्निव प्राह चन्द्रापीडं क्षितीश्वरः ॥ ६७ ॥
नूनमुत्पादितो मन्युर्[2]अविनीत त्वयास्य सः ।
येनान्तःस्फुरता सोऽद्य त्वां विहाय वनं श्रितः[3] ॥ ६८ ॥
वियुक्तौ न पुरा दृष्टौ युवां क्षणमपि क्वचित् ।
किं जातमधुना येन त्वं गृहे स तपोवने ॥ ६९ ॥
विना नहि निमित्तेन शक्या सोढुं गरीयसी ।
मातापितृसुहृद्बन्धुदेशवित्तवियोगिता ॥ ७० ॥
इत्युक्तवति भूपाले शुकनासस्ततः[4] परम् ।
अन्तः स्फुरितशोकोऽपि स्तम्भितक्षोभमभ्यधात् ॥ ७१ ॥
किमेतदविचार्यैव वस्तुतत्त्वमतर्कयत् ।
शङ्कानुमानमात्रेण कृतधीरपि[5] भाषसे ॥ ७२ ॥
अलातवृष्टिरिन्दोर्वा क्षीराद्वा कण्टकोद्गमः[6] ।
तस्य मन्युः कुमाराद्वा कस्य[7] संभावनास्पदम् ॥ ७३ ॥
पापः स एव दुर्जातः सुचिरं पाठितः शुकः ।
यत्रामृतरसोऽप्युप्तः[8] फलितः कालकूटवत् ॥ ७४ ॥
स त्वं कुमार सर्वस्याः पृथिव्या एकजीवितम् ।
दुरात्मनो न तस्यार्थे शोकमुद्वोढुमर्हसि ॥ ७५ ॥
तस्मिन्विरतवाक्ये तु पतित्वा पादयोः पितुः ।
साश्रुकण्ठमथोवाच चन्द्रापीडः कृताञ्जलिः ॥ ७६ ॥
तात[9] शङ्कितदोषस्य प्रायश्चित्तमिदं मम ।
गत्वा तमानयामीह[10] त्वमनुज्ञातुमर्हसि ॥ ७७ ॥
तमागतमिहालोक्य पृष्ट्वा शपथपूर्वकम्[11] ।
ततो गुणं वा दोषं वा क्रमेण[12] मम वेत्स्यसि ॥ ७८ ॥

---

१. 'दृष्ट्वा' क. २. 'त्वया कोऽप्यस्य तादृशः' ख. ३. 'गतः' ख. ४. 'त्वनन्तरम्' ख. ५. 'हृतधीरिव' ख. ६. 'कण्टको मुहुः' क. ७. 'तव' ख. ८. 'यथा तरुः सुधासिक्तः' ख. ९. 'दोषप्रायश्चित्तमिदं मम साधनमेव तत्' ख. १०. 'इति तदनु-' ख. ११. 'शिरसि चुम्बितम्' ख. १२. 'मम तातोऽवभोत्स्यते' ख.

तत्रस्थं [1]तमनानीय मयैतत्स्वगृहं पुनः ।
न [2]प्रवेष्टव्यमित्येष [3]गृह्यतां मम निश्चयः ॥ ७९ ॥

तथोक्तवति तस्मिंस्तु [4]राजा बाष्पाकुलेक्षणः ।
[5]अपश्यन्मन्त्रिणो वक्त्रं स च तत्र बहूक्तवान् ॥ ८० ॥

सर्वोपायप्रयोगेण पित्रा तेन च मन्त्रिणा ।
चन्द्रापीडो निरुद्धोऽपि नाचलन्निश्चयात्ततः ॥ ८१ ॥

सिञ्चन्ती बाष्पधाराभिर्मौलिमस्य मनोरमा ।
करुणं विलपन्ती च चिरमेनमबोधयत् ॥ ८२ ॥

त्वयि स्थिते निजो[6]त्सङ्गस्थितं पश्यामि [7]पुत्रकम् ।
नूनमन्धीभवाम्येव त्वयि [8]पुत्र गते पुनः ॥ ८३ ॥

इत्थं विलासवत्या च तया च करुणोक्तिभिः ।
चिरमार्द्रीकृतोऽप्येष न जहाति स निश्चयम् ॥ ८४ ॥

ततोऽश्रुभरसंरुद्ध[9]गद्गदाक्षरया गिरा ।
यथा जानासि पुत्रेति कथमप्ये[10]वंवदन्नृपः ॥ ८५ ॥

दत्तानुज्ञस्ततः पित्रा प्रणम्य सकलान्गुरून् ।
श्रुत्वा [11]च यत्नसंरुद्धबाष्पधारास्तदाशिषः ॥ ८६ ॥

चन्द्रापीडः [12]पथि श्रान्तान्विनिवर्त्य यथा तथा ।
पार्थिवान्परिवारेण प्रातिष्ठत लघीयसा ॥ ८७ ॥

किं तन्मयाभ्यधायीति दूयमानमनाः शुचा ।
[13]सेनया सह राजापि विवेश नगरीं शनैः ॥ ८८ ॥

वलाहकस्तु सेनानीर्वार्यमाणोऽपि भूभुजा ।
स्वगृहानप्रविश्यैव स चन्द्रापीडमन्वगात् ॥ ८९ ॥

---

१. 'च तमानीय व्यपेताश्वं गृहं' ख. २. 'संप्रवेष्टव्यं' ख. ३. 'गृहीतोमेति' ख. ४. 'च' ख. ५. 'सोऽपश्यत्' ख. ६. 'उत्सङ्गे स्थितिं' ख. ७.'पुत्रक' ख. ८. 'वत्स' ख. ९. 'दुर्ग्रहाक्षरया' ख. १०. 'अब्रवीत्' ख. ११. 'प्रयत्न' ख. १२. 'परिश्रान्तान्संस्थाप्य च यथातथम्' ख. १३. 'शुष्यन्कृच्छ्रेण राजा तु विवेश नगरीं पुनः' ख.

चन्द्रापीडस्ततो गच्छन्दयितादर्शनोत्सुकः ।
अमन्यत तृ[1]णायैव मध्यं कैलासविन्ध्ययोः ॥ ९० ॥
नाजीगणद्द्रुमानद्रीन्न नदीर्न वनस्थलीः ।
न रात्रिं नापि[2] दिवसं धावन्निन्द्रायुधेन सः ॥ ९१ ॥
ततः प्रावर्तत प्रावृट् पीनोन्नतपयोधरा ।
कान्ता नवरसार्द्रेव प्रत्युद्गन्तुमि[3]वागता ॥ ९२ ॥
तामप्यगणयित्वासौ व्रजन्कतिपयैर्दिनैः ।
अच्छोदसरसस्तीरमे[4]वापाकलुषाम्भसः ॥ ९३ ॥
अपनीतसमायोगः परिवर्त्य च वाससी ।
महाश्वेतामथ द्रष्टुं स जगाम तदाश्रमम् ॥ ९४ ॥
तत्रापश्यन्महाश्वेतां तदालोकनलज्जिताम् ।
[5]वदन्तीं निजदौरात्म्यं प्रलापकरुणस्व[6]नाम् ॥ ९५ ॥
तत्कारणापरिज्ञानमोहनिष्पन्दपक्ष्मणा ।
निरीक्ष्य चक्षुषा पृष्टा चन्द्रापीडेन साब्रवीत् ॥ ९६ ॥
केयूरकमुखाद्बुद्ध्वागतं त्वां पितुराज्ञया ।
दिनानि कतिचित्स्थित्वा [7]कादम्बर्या निकेतने ॥ ९७ ॥
तत एत्य यथान्यायमासी[8]नात्र तपोवने ।
विप्रं युवानमद्राक्षं विचिन्वन्तं वनस्थलीः ॥९८॥ (युगलकम्)
सप्रत्यभिज्ञमालोक्य मामसौ [9]मन्मथोन्मुखः ।
तीव्रमुद्वेजयामास नर्मवक्रोक्तिचापलैः ॥ ९९ ॥
ततो निर्भर्त्स्यमानोऽपि वार्यमाणोऽपि यत्नतः ।
स बहूनि दिनान्यास्त तथा मामुपपीडयन् ॥ १०० ॥
एकदा तु शयानां मामागत्य निशि निस्त्रपः ।
कृताञ्जलिरनङ्गार्तो ययाचे रतिदक्षिणाम् ॥ १०१ ॥

---

१. 'उल्लङ्घितवत्' ख. २. 'न दिनं वापि' ख. ३. 'आगतम्' ख. ४. 'आपतद्भूषिताम्भसः' ख. ५. 'रुदती निजदौरात्म्यात्' ख. ६. 'स्वरम्' ख. ७. 'कादम्बर्यनुरोधतः' ख. ८. 'अस्मि' ख. ९. 'मन्मथोत्सुकः' ख.

ततो धिगिति सक्रोधमभिधाय कमण्डलोः ।
जलमुद्धृत्य शप्तो[1]ऽसौ मयानुध्याय देवताः ॥ १०२ ॥

शुकवन्मुखरागेण वक्तुमेवासि शिक्षितः ।
गच्छ दूरं दुराचार शुक एव भविष्यसि ॥ १०३ ॥

शापेन तेन महता मदनाग्निना वा
जन्मान्तरोपचितदुष्कृतकर्मणा वा ।
चित्रेण वा भगवतश्चरितेन धातुः
प्राणानसावुदसृजन्निपपात चोर्व्याम् ॥ १०४ ॥

आक्रन्दतः परिजनात्[2]सशुचोऽपरेद्यु-
र्ज्ञातो मया स शुकनाससुतः सखा ते ।
तत्पश्य मां प्रियवयस्यवियोगहेतु-
मस्तत्रपामकरुणां प्रखलाम[3]भव्याम् ॥ १०५ ॥

इति श्रुत्वा भिन्नः प्रसभमिव शूलाग्रशिखया
कदा त्वां पश्येयं कमलमुखि कादम्बरि पुनः ।
[4]वदन्नेवं शोकस्फुटितहृदयस्तत्क्षणमसू-
ञ्जहच्चन्द्रापीडस्तरुरिव पपात क्षितितले ॥ १०६ ॥

ततो [5]भुग्नग्रीवं मुकुलितसितापाङ्गनयनं
प्रभां तन्वीं दीनामिव विदधतं दिक्षु शनकैः ।
क्षितौ विस्रस्ताङ्गं पतितममुमालोक्य विवशा
महाश्वेता सद्यः कथमपि न याति स्म दलशः ॥ १०७ ॥

द्रष्टुं दीनामिव वसुमतीमक्षमस्तेन शून्यां
कुर्वन्[6]नुद्यद्विरहकरुणाक्रन्दिनश्चक्रवाकान् ।
अब्रह्मण्यध्वनिमिव करैरूर्ध्वशाखैर्विमुञ्च-
न्नस्तं तिग्मद्युतिरपि ततः क्षामधामा जगाम ॥ १०८ ॥

इति श्रीविपश्चिद्वराग्रगण्याचार्यश्रीभट्टजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे षष्ठः सर्गः ।

---

१. 'एषोऽसि' ख. २. 'अथ सोऽपरेद्युः' ख. ३. 'अभाग्याम्' ख. ४. 'क्वचिन्नैवं' ख. ५. 'भग्नग्रीवं' क. ६. 'उद्यन्' क.

सप्तमः सर्गः ।

तस्मिन्नवसरे बाला कादम्बर्यपि वेधसा ।
तत्रैवानीयतानेकमायावैचित्र्यकारिणा ॥ १ ॥
असौ हि पत्रलेखाया मुखात्केयूरकस्य च ।
[1]असंशयं समायातं चन्द्रापीडम[2]बुध्यत ॥ २ ॥
ततः सकलविस्रम्भयोग्यं विगतयन्त्रणम् ।
महाश्वे[3]ताश्रमं प्राप्तं प्रत्युद्गन्तुमियेष तम् ॥ ३ ॥
वैशम्पायनविध्वंसवृत्तान्तसमनन्तरम् ।
चन्द्रापीडमनःपीडां वयस्यविरहोद्भवाम् ॥ ४ ॥
शङ्कमाना महाश्वेता तत्समाश्वासकारणम् ।
कादम्बरीं [4]परिज्ञाय तदागमनसत्वरा ॥ ५ ॥
[5]तस्यास्तरलिकां गेहं शीघ्रमागम्यतामिति ।
संदिश्य प्राहिणोत्सा [6]च तूर्णं गत्वा तथावदत् ॥६॥ (तिलकम्)
जातोत्साहा महाश्वेतासंदेशेन [7]गरीयसीम् ।
गमनोत्कलिकां दध्रे बुद्धौ कादम्बरी ततः ॥ ७ ॥
ताम्बूलपटवासादिसं[8]विधानविदग्धया ।
हृदयप्रत्ययया सख्या सहिता मदलेखया ॥ ८ ॥
पत्रलेखां पुरस्कृत्य प्रियचर्[9]चाविचक्षणाम् ।
के[10]यूरकं च तत्रैव दिने तां भुवमाययौ ॥ ९ ॥
आयान्त्याश्च तदा तस्या दुर्निमित्तपरम्परा ।
प्रादुर्बभूव बालाया हृदयोत्कम्पकारिणी ॥ १० ॥
महाश्वेताश्रमोपान्तमापदस्तं गते रवौ ।
उदिते च निशानाथे संतप्तकरुणाह्रदे ॥ ११ ॥

---

१. 'मुक्तासंशयमायान्तं' ख. २. 'व्यबुध्यत' ख. ३. 'आश्रमोपान्तं' ख. ४. 'समर्थ्याथ तदायन' ख. ५. 'सखीं' ख. ६. 'अथ' ख. ७. 'गरीयसा' ख. ८. 'संविदानविधिज्ञया' ख. ९. 'चर्या' ख. १०. 'केयूरकोऽपि' ख.

आसाद्य च तमुद्देशं करुणं रोदनध्वनिम् ।
वनान्तकंदरोद्भूतप्रतिशब्दमथाशृणोत् ॥ १२ ॥
मन्ये सैव महाश्वेतावर्त्मनीयमुपस्थिता ।
इत्यसौ शङ्कमानेव विवेश द्रुतमाश्रमम् ॥ १३ ॥
ततः प्रविश्य सापश्यत्प्राणनाथं तथास्थितम् ।
महाश्वेतां [1]च तामार्तनिनादं रुदतीं भृशम् ॥ १४ ॥
[2]तामुद्वीक्ष्य महाश्वेतां विकसच्छोकविह्वला ।
नितान्तताडितोर[3]स्कं रुदती मोहमागमत् ॥ १५ ॥
पत्रलेखापि तद्रूपचन्द्रापीडविलोकिनी ।
मु[4]मोच सहसा प्रज्ञां निपतन्ती शिलातले ॥ १६ ॥
कादम्बर्या तु [5]धैर्येण पृष्टा तरलिका तदा ।
आचचक्षे यथावृत्तं सर्वं [6]तन्मरणक्रमम् ॥ १७ ॥
तदाकर्ण्य विहायैव वैक्लव्यं स्त्रीजनोचितम् ।
[7]लब्धसंज्ञां महाश्वेतां मदलेखां च [8]सावदत् ॥ १८ ॥
संततस्थूलधारेण चिरात्प्रभृति रोहता ।
खिन्नाहमधुनानेन [9]रोदनेन गरीयसा ॥ १९ ॥
यथायोग्येन गच्छामि नहि शक्नोमि रोदितुम् ।
[10]सखि मे दर्शितः पन्था नाथेनैव महात्मना ॥ २० ॥
अयं सुहृद्वियोगेन नारोदीद्विललाप वा ।
प्राणानेव प्रियानौज्झीत्स पन्थाः क्व गतो मम ॥ २१ ॥
युक्तं सखि महाश्वेते तव [11]प्राणितुमीदृशम् ।
जीविता देवताभिस्त्वं पुनस्तत्संगमाशया ॥ २२ ॥
अहं सर्व[12]प्रकारं तु विधिभग्नमनोरथा ।
करोमि दुर्भगैः प्राणैः किं कल्याणबहिष्कृता ॥ २३ ॥

---

१. 'तु' ख. २. 'महाश्वेतां तु सा वीक्ष्य विकसच्छोकविह्वलाम्' ख. ३. 'उरस्का' ख. ४. 'मुमुचे संज्ञया सद्यः' ख. ५. 'अथ' ख. ६. 'तं' ख. ७. 'लब्धसंज्ञा' ख. ८. 'सान्ववीत्' ख. ९. 'दग्धरोदनेन' ख. १०. 'स च मे दर्शितोऽनेन' ख. ११. 'जीवितुं' ख. १२. 'प्रकारेण' ख.

[1]मदलेखे तथा कुर्यास्तातोऽम्बा च कुले स्थितौ।
मद्वियोगोपतापेन यथा न धृतिमुज्झतः॥ २४॥
स्वयमेव[2]ासितव्यं तु मद्वासभ[3]वने त्वया।
यथा मणिगवाक्षेषु शेरते नोर्णनाभयः॥ २५॥
कुमारस्तत्र चित्रस्थो मयैव लिखितः स्वयम्।
रक्षणीयो यथा [4]नास्तमेति चित्रस्थितोऽप्यसौ॥ २६॥
शयनीयशिरो[5]भागे रत्नभित्तिनिवेशितः।
कामदेवपटः क्वापि निक्षेप्तव्यो वृथार्चितः॥ २७॥
क्रीडापर्वतको देयः प्रशान्ताय तपस्विने।
तत्रोषितं कुमारेण नहि सोऽन्यस्य शोभते॥ २८॥
दीर्घिकाराममध्ये मे पद्मिनीखण्ड[6]मण्डिता।
तत्रास्ते कृतवास्तव्यं राजहंसकदम्बकम्॥ २९॥
धारायन्त्रैः प्रपूर्णा च क्रीडावापी तदन्तिके।
स्नेहान्मया स्वयं सिक्तमस्ति लीलावनं नवम्॥ ३०॥
तस्मिन्कृतनवोद्वाहा बकुले [7]मालती मया।
मुक्तः कङ्कणको नास्या मोचनीयस्त्वयैव सः॥ ३१॥
मया पुत्रीकृतश्चासावशोकतरुबालकः।
वर्धनीयः स्वहस्ताम्बुसेकैः स्तन्यपयोनिभैः॥ ३२॥
गृहे मुहुरपश्यन्ती मामसौ [8]चपलेक्षणा।
नूनं हरिणिका [9]चास्ते [10]प्रापयेस्तां च काननम्॥ ३३॥
शुकः स परिहासो मे कालिन्दी सा च शारिका।
यथा न कलहायेते तथा कुर्याः प्रतिक्षणम्॥ ३४॥

---

१. 'मद्वियोगोपतापेन तातो वासगृहे चिरम्। मदलेखे तथा कुर्या यथा न धृतिमुज्झति॥' ख. २. 'अधिशय्येत' ख. ३. 'भवनं' ख. ४. 'नान्तर्धत्ते सखि ततोऽप्यसौ' ख. ५. 'भागरत्न-' ख. ६. 'मण्डितम्' ख. ७. 'मालतीलता' ख. ८. 'चटुलेक्षणा' ख. ९. 'यास्ते' ख. १०. 'नानयेः' क.

नित्यमेव मदुत्सङ्गलालिता नकुलाङ्गना ।
स्वाङ्के शाययितव्यासौ यथा याति न दूरतः ॥ ३५ ॥
किं[1] कार्यमथवा गेहे चिन्तया दीर्घयानया ।
संपादय चितामाशु प्रज्वलज्जातवेदे[2]सम् ॥ ३६ ॥
केयूरक चिरं किं मा[3]मेतिदीनामवेक्षसे ।
उत्तिष्ठ चिनु काष्ठानि समाहर हुताशनम् ॥ ३७ ॥
लावण्याम्बुमयो देहः क्रियते कथमग्निसात् ।
[4]कुमारममुमादाय पतामि वरमम्भसि ॥ ३८ ॥
कुमारे मित्रदुःखेन तत्क्षणोज्झितजीविते ।
[5]इयन्तमपि जीवन्ती कालं लज्जेऽह[6]मात्मना ॥ ३९ ॥
द्रष्टव्यासि कदेत्येवमभिधायैव मां गतः ।
सेयं चिरयतीत्येवमधुनाभिदधीत सः ॥ ४० ॥
इति [7]कादम्बरीं सद्यो मरणव्य[8]वसायिनीम् ।
शिशिरज्योति[9]रालोक्य कम्पमान इवा[10]भवत् ॥ ४१ ॥
येन दुग्धाब्धिकल्लोलप्लाव्यमान इवाभवत् ।
प्रवृत्तदन्तवीण[11]श्च सकलः कन्यकाजनः ॥ ४२ ॥
अथ दिव्याकृतिः कोऽपि पुरुषो [12]गगनस्थितः ।
गर्जद्घनघटाधीरगम्भीरध्वनिरभ्यधात् ॥ ४३ ॥
त्वं हि वत्से महाश्वेते पूर्वमाश्वासिता मया ।
[13]स्थितो मदन्तिकेऽद्यापि पुण्डरीकस्तव प्रियः ॥ ४४ ॥
चन्द्रापीडस्त्वयं कंचित्कालं निद्रा[14]यमाणवत् ।
अत्रैवाविचलत्कान्तिरास्तां कादम्बरीप्रियः ॥ ४५ ॥

---

१. 'कृतं मे गृहकारुण्यचिन्तया' ख. २. 'वेदसः' ख. ३. 'दीनां दीनमिवेक्षसे' ख. ४. 'कुमारस्य प्रसादाय' ख. ५. 'इयतीमपि जीवन्ती' ख. ६. 'आत्मनः' ख. ७. 'कादम्बरी' ख. ८. 'व्यवसायिनी' ख. ९. 'अप्याशु' ख. १०. 'उदभूत्' ख. ११. 'तु' ख. १२. 'गगने' ख. १३. 'मदन्तिके स्थितः' ख. १४. 'सुप्त इव स्फुटम्' ख.

अनेन हि पुनर्लब्धनिरपायस्थिरायुषा ।
गाढकण्ठग्रहानन्दः कादम्बर्याः करिष्यते ॥ ४६ ॥
भवत्योरयमेवास्तु चित्त[1]संप्रत्ययो दृढः ।
नस्प्रक्ष्यति वि[2]कारो यदेनं भूतस्वभावजः ॥ ४७ ॥
इत्युक्त्वा ज्योतिषा तेन सहसैव तिरोदधे ।
सविस्मयस्तदा चाभूदखिलः कन्यकाजनः ॥ ४८ ॥
पत्रलेखा च[3] तेनैव ज्योतिषो वचनेन सा[4] ।
[5]लब्धसंज्ञा समुत्थाय गत्वा च[6] त्वरितैः पदैः ॥ ४९ ॥
तमिन्द्रायुधनामानमश्वमा[7]दाय केसरात् ।
तेनैव [8]सहितागाधमविशन्मध्यमम्भसः ॥ ५० ॥
शङ्कितेव च[9] तां वेगयातां तरलिकान्वगात् ।
सा ददर्श पयोमध्यादुद्गच्छन्तं कपिञ्जलम् ॥ ५१ ॥
प्रसृत्य [10]व्याचचक्षे ह यथालोकितमद्भुतम् ।
तेनापि विस्मयस्तासां [11]कन्यानां ववृधेतराम् ॥ ५२ ॥
अथ बिभ्रज्जटास्तन्वीः [12]स्रुताम्बुकणदन्तुराः ।
[13]जलार्द्रवल्कलस्ताभिरदृश्यत कपिञ्जलः ॥ ५३ ॥
स्वयमेवोपसृ[14]त्यासौ महाश्वेतामभाषत ।
राजपुत्र्यपि नामायं प्रत्यभिज्ञायते जनः ॥ ५४ ॥
अहं कपिञ्जलस्तस्य वयस्यो दयितस्य ते ।
चिरागमनदौरात्म्यादुपालभ्योऽस्मि न[15] त्वया ॥ ५५ ॥
कादम्बर्या त्वया चैताः[16] श्रुताश्चन्द्रमसो गिरः ।
मदीयमपि वृत्तान्तमधुना शृणुतं युवाम् ॥ ५६ ॥

---

१. 'चित्ते' ख. २. 'विकारोऽयं यदेनं भूतभावनः' ख. ३. 'तु' ख. ४. 'च' ख. ५. 'लब्ध्वा चैतन्यमुत्थाय' ख. ६. 'द्रुततरैः' ख. ७. 'आरुह्य केसरैः' ख. ८. 'सहसागाधं प्रविष्टा' ख. ९. 'अथ' ख. १०. 'च' ख. ११. 'अवर्धततरां ततः' ख. १२. 'च्युताम्बुकणविप्रुषः' ख. १३. 'स्नानार्द्रे' ख. १४. 'उपविश्याथ' ख. १५. 'च' ख. १६. 'इमाः' ख.

अप्युत्क्षिप्य [1]तथा नीते वयस्ये तेन तत्क्षणम् ।
[2]अहं गगनमु[3]त्प्लुत्य तमेवानुसर[4]न्नगाम् ॥ ५७ ॥
ततोऽसौ दूर[5]मुत्प्लुत्य प्रविश्य शशिमण्डलम् ।
[6]पश्चादेव प्रविष्टं मामवलोक्येदमब्रवीत् ॥ ५८ ॥
कपिञ्जल मृगाङ्कं मां विद्धि सोऽहं [7]त्वामुना ।
वयस्येन वृथा शप्तो हे[8]मकूटगते त्वयि ॥ ५९ ॥
वोढव्या लोकयात्रा हि लोकपालतया मया ।
उदितोऽहं निजे काले [9]ततः प्रविकिरन्करान् ॥ ६० ॥
अयं मदंशुसं[10]स्पर्शप्रवृद्धाधिकमन्मथः ।
कण्ठोपान्तग[11]तप्राणो रूक्षं मां वीक्ष्य शप्तवान् ॥ ६१ ॥
[12]यथाद्य विरहार्तोऽहमे[13]त्य व्यापादितस्त्वया ।
मरिष्यसि तथैव त्वमिन्दो जन्मनि जन्मनि ॥ ६२ ॥
परिशप्तो मयाप्येष त्वमप्येवं मरिष्यसि ।
[14]भद्र देवेत्यनागस्कशापतापोदितक्रुधा ॥ ६३ ॥
ततः प्रतनुमन्योर्मे परिताप इवाभवत् ।
[15]जामातायं महाश्वेतासंबन्धादिति[16] पश्यतः ॥ ६४ ॥
कुर्या[17]दपि प्रतीकारं श्वेतकेतुर्महातपाः ।
[18]शरीरमस्य रक्षामि साम्प्रतैरहमंशुभिः ॥ ६५ ॥
इत्युत्क्षिप्य मयेहायमानीतस्त्वं च सत्वरम् ।
गत्वा निवेदयेमं तु वृत्तान्तं श्वेतकेतवे ॥ ६६ ॥
इति चन्द्रमसो वाक्यं श्रुत्वाहं दिवमुत्पतन् ।
[19]त्वरितप्रसृतः कंचिद्वैमानिकमलङ्घयम् ॥ ६७ ॥

---

१. 'ततो' ख. २. 'ततो' ख. ३. 'उत्पत्य' ख. ४. 'अहम्' ख. ५. 'उत्सृज्य' ख. ६. 'अनन्तरं' ख. ७. 'तवात्मजः' ख. ८. 'हेमकूटं' ख. ९. 'यथाकालमतः' ख. १०. 'संपन्न' क. ११. 'चलत्प्राणो' ख. १२. 'यथैव' ख. १३. 'इह' ख. १४ 'भद्र-देवेत्य—इवाभवत्' इति ख-पुस्तके त्रुटितम्. १५. 'तामतैष' ख. १६. 'भवति स्फुटम्' ख. १७. 'अत्र' ख. १८. 'देहमेतस्य' क. १९. 'त्वरितं प्रस्थितः' ख.

स च मामशपत्कोपादश्वेनेव तपोबलात् ।
त्वयाहं लङ्घितस्तस्मादश्व एव भविष्यसि ॥ ६८ ॥
स मया प्रणिपत्योक्तः [1]सुहृच्छोकान्वचेतसः ।
प्रमादान्न तपोदर्पान्मम तत्संहर क्रुधम् ॥ ६९ ॥
स त्वभाषत दत्तोऽयं शापो भवति नान्यथा ।
तारापीडस्य पुत्रार्थमुज्जयिन्यां तपस्यतः ॥ ७० ॥
[2]राज्ञो यास्यति पुत्रत्वं चन्द्रमाः सनिदर्शनम् ।
पुण्डरीकस्तदीयस्य शुकनासस्य मन्त्रिणः ॥ ७१ ॥
तारापीड[3]सुतस्येन्दोर्गन्ता वाहनतां भवान् ।
तस्यावसाने [4]स्नात्वैव शापस्यान्तो भविष्यति ॥ ७२ ॥
तदाकर्ण्यार्णवे तूर्णमपतं शापमूर्च्छितः ।
ततोऽश्वीभूत एवाहमुदतिष्ठमयोनिजः ॥ ७३ ॥
स्मृतिस्तुरग[5]भावेऽपि न मे नष्टा कदाचन ।
ममैवायमिहानीतः किंनरानुस्रुतिक्रमात् ॥ ७४ ॥
वीप्सान्वितश्च [6]शापोऽयं परस्परमभूत्तयोः ।
द्वितीयजन्मयोगेन [7]तयोर्भाव्यमतो ध्रुवम् ॥ ७५ ॥
तद्गच्छामि यथावृत्तमाख्यातुं श्वेतकेतवे ।
द्वितीयजन्मग्रहणं क्व तयोश्चेति वेदितुम् ॥ ७६ ॥
कपिञ्जल[8]कथातस्तं वैशम्पायनविग्रहम् ।
पुण्डरीकं परिज्ञाय महाश्वेतान्वतप्यत ॥ ७७ ॥
द्वितीयेऽप्यहमेवास्य जाता जन्मनि मृत्यवे ।
शप्तो मदनुरक्तोऽसौ मयेति विललाप सा ॥ ७८ ॥
कपिञ्जलस्त[9]दा त्वेवं रुदतीं तामवारयत् ।
अब्रवीच्चावधिः पूर्णः प्रायो दुःखस्य वर्तते ॥ ७९ ॥

---

१. 'बन्धुशोकार्तचेतसा' ख. २. 'स तु यास्यति पुत्रत्वं चन्द्रमास्तन्निदर्शनम्' ख. ३. 'सुतस्य त्वं गत्वा वाहनतां व्रज' ख. ४. 'स्नात्वा तु शान्तपापो' ख. ५. 'भावेन न मे भ्रष्टा' क. ६. 'कोपोऽयं' क. ७. 'भवितव्य' ख. ८. 'कथाख्यातं' ख. ९. 'तदेत्येवं' ख.

[1]अल्पेनैव हि कालेन पुण्डरीकस्य [2]संस्मितम् ।
अक्षमालां पुनः पाणिपल्लवे विनिधास्यसि ॥ ८० ॥
कादम्बर्यपि माधुर्यमुग्धस्मितसुधाञ्चितैः ।
[3]प्रमोदयिष्यते सान्द्रैश्चन्द्रापीडस्य भाषितैः ॥ ८१ ॥
कादम्बरी तमप्राक्षीद्भगवन्[4]सौ क्व वर्तते ।
पत्रलेखेति स त्वाह मया नाज्ञायि तद्गतिः ॥ ८२ ॥
इत्युक्त्वोदपतद्व्योम रोमकूपाम्बुविप्रुषः ।
[5]अच्छोदबिन्दुसंदिग्धाः किरन्नथ कपिञ्जलः ॥ ८३ ॥
तस्मिन्गते महाश्वेताकादम्बर्यौ तथैव ताम् ।
सशोकविस्मयोत्कम्पे कथया निन्यतुर्निशाम् ॥ ८४ ॥
महाश्वेता[6]कथावृत्ते तत्राप्यधिकनिश्चया ।
कादम्बर्याः स्थिरं [7]चित्ते सा प्रत्ययमजीजनत् ॥ ८५ ॥
अपरेद्युरथ स्फीतस्फटिकोपलवेदिकाम् ।
हृद्यामारोप्य कर्पूरतुषारकणदन्तुरैः ॥ ८६ ॥
अभिषिच्य जलैः स्वच्छैरनुलिप्य च चन्दनैः ।
आनर्च चन्द्रापीडस्य देहं कादम्बरी चिरम् ॥ ८७ ॥
यदि सत्योऽयमाश्वासः [8]सर्वं स्वस्थमथान्यथा ।
क्व गतो मे तदा मृत्युरित्यन्तर्निश्चिकाय सा ॥ ८८ ॥
जगाद च महाश्वेतामिदानीं [9]ननु न त्रपे ।
सखीति [10]व्याहरन्ती त्वां दुःखसब्रह्मचारिणीम् ॥ ८९ ॥
विधिना विदधानेन समानसुखदुःखताम् ।
आवयोश्चिरसंरूढं [11]सखीप्रेम न दूषितम् ॥ ९० ॥
ततः प्रभृति सा मूर्तिमर्चयन्त्य[12]ास्त तापसी ।
चन्द्रापीडस्य चन्द्रार्धचूडस्येव दिवानिशम् ॥ ९१ ॥

---

१. 'कालेनानतिदीर्घेण' ख. २. 'संमताम्' ख. ३. 'प्रसादमेष्यते' ख. ४. 'क्व नु वर्तते' ख. ५. 'नैशोदबिन्दु' ख. ६. 'यथावृत्ते' ख. ७. 'तत्र सप्रत्ययं' ख. ८. 'महाश्वासः सर्वं स्वच्छं' ख. ९. 'अगतत्रपा' ख. १०. 'व्यहरन्तीं' क. ११. 'सखिप्रेम' ख. १२. 'अथ' ख.

दिवसेष्वथ गच्छत्सु निर्विकारशरीरताम् ।
चन्द्रापीडस्य पश्यन्ती [1]स्थिरामाशां बबन्ध सा ॥ ९२ ॥
ततः सेनान्यमाहूय बलाहकमभाषत ।
विदितस्तव सर्वोऽयं वृत्तान्तो बहुविस्मयः ॥ ९३ ॥
देहकान्त्यविनाशेन जातः संप्रत्ययश्च नः ।
अर्हस्युज्जयिनीं गन्तुं [2]प्रभोराश्वासकारणात् ॥ ९४ ॥
सोऽब्रवीद्देवि [3]तत्रान्यं प्रज्ञातं प्रहिणोम्यहम् ।
युवराजमिहोत्सृज्य न गन्तुं [4]स्वयमुत्सहे ॥ ९५ ॥
ततस्त्वरितको नाम राज्ञो [5]निकटसेवकः ।
प्रहितस्तेन लेखश्च स्वहस्तलिखिताक्षरः ॥ ९६ ॥
स गत्वोज्जयिनीं प्राप्य सर्वं राज्ञे न्यवेदयत् ।
राजा सान्तःपुरामात्यस्तदश्रौषीद्यथाक्रमम् ॥ ९७ ॥
ततस्तनयहृद्भङ्गश्रुतिव्यामूढचेतनः ।
[6]उत्तरस्मिंश्च वृत्तान्ते न दृढप्रत्ययोऽभवत् ॥ ९८ ॥
शुकनासस्तु तं प्राह कर्मवैचित्र्यवेदिनः ।
श्रुतेतिहासशास्त्रस्य देव कोऽत्र तव भ्रमः ॥ ९९ ॥
देवतानामृषीणां च मर्त्यदेहपरिग्रहः ।
श्रूयते हि पुराणेषु स्मृतावपि च पठ्यते ॥ १०० ॥
[7]चित्राश्चातिशयाः पुंसाममानुषजनोचिताः ।
किमप्यलौकिकं बीजमनुमापयितुं क्षमाः ॥ १०१ ॥
[8]कुमारश्च गुणैरिन्दोरतिदूरं न भिद्यते ।
सा कान्तिराकृतिः शक्तिः क [9]दृष्टा चान्यमानुषे ॥ १०२ ॥
स्वप्ने देवीमुखे दृष्टचन्द्रमास्तु विशं[10]स्त्वया ।
[11]मया च पुण्डरीकाङ्का ब्राह्मणी समदृश्यत ॥ १०३ ॥

---

१. 'स्थिरं' ख. २. 'प्रभावाश्वास' क. ३. 'तत्राहं प्रज्ञानं' क. ४. 'मम सांप्रतम्' ख. ५. 'निकटवर्तिनः' ख. ६. 'उक्ते तस्मिन्स' ख. ७. 'चित्राख्यातिशयाः' ख. ८. 'कुमारस्य गुणैरिन्दोरपि भेदो न विद्यते' ख. ९. 'दृष्टान्यत्र पूरुषे' ख. १०. 'तदा त्वया' ख. ११. 'मयापि पुण्डरीकाङ्को ब्राह्मणः' ख.

शाप[1] एव तयोरासीदावयोस्तु परो वरः ।
देवताः पुत्रतां यान्ति येद्गृहे[2] मर्त्यधर्मिणाम् ॥ १०४ ॥
कपिञ्जलः[3] पुनस्तादृगविलुप्तगतिर्दिवि ।
आचक्षीत कथं[4] मिथ्या तुरगो नु क तादृशः ॥ १०५ ॥
इदं कान्यत्र दृष्टं वा जीवितेनोज्झितोऽपि यः[5] ।
पञ्चभूतात्मको[6] देहः स यदेति न विक्रियाम् ॥ १०६ ॥
ब्रूयात्त्वरितको मिथ्या लिखेन्मिथ्या बलाहकः ।
सुपरीक्षितभृत्यस्य[7] नेयं शङ्का तवोचिता ॥ १०७ ॥
विदधतर्मसमोल्लसत्प्रमोदं[8] जगदचिरादवलोकयिष्यसि त्वम् ।
शशिनमिव विधुंतुदेन मुक्तं व्यपगतशापकदर्थनं कुमारम् ॥ १०८ ॥
इति मन्त्रिवचांसि शृण्वतोऽपि स्वसुतस्नेहविसंस्थुलस्य[9] राज्ञः ।
न धृतिं[10] प्रतिपद्यते स्म चेतो गमने च व्यवसायमाललम्बे ॥ १०९ ॥
अथ सह महिषीभिर्बाष्पपूर्णेक्षणाभि-
र्निजसचिवसमेतोऽगच्छद्[11] च्छोदतीरम् ।
शिथिलितसकलास्थः[12] पार्थिवस्तं च यान्तं
जनपदपुरलोकः सर्व एवान्वगच्छत्[13] ॥ ११० ॥
तस्मिन्गतेऽथ विजनापणवीथिकान्ता
कान्तारभूरिव तदोज्जयिनी बभूव ।
याते दिवं सकललोकमनोभिरामे
रामे यथा हतसमृद्धिरभूदयोध्या ॥ १११ ॥
गत्वा नृपः सुतमवेक्ष्य चिरं रुदित्वा
तत्तद्विलप्य सह तत्र विलासवत्या ।

---

१. 'अत एव तयोरीदृगावयोश्च परे' ख. २. 'यद्देहे' ख. ३. 'कपिञ्जलमुनिस्तावत्' ख. ४. 'महातेजाः कथं मिथ्या तु' ख. ५. 'यत्' ख. ६. 'याति पञ्चात्मको देहश्चिरादपि' ख. ७. 'मूलस्य' ख. ८. 'अक्रशोल्लसत्' ख. ९. 'विसंष्ठुलस्य' ख. १०. 'धृतिं' क. ११. 'प्रापत्' क. १२. 'सकलार्थं पार्थिवं तं' ख. १३. 'अन्वयासीत्' ख.

उत्सृज्य राज्यविभवं यतिवद्यधत्त
तत्रैव वल्कलधरः स्थितिमद्य तावत्[1] ॥ ११२ ॥
इत्युक्त्वा कृतजृम्भिकः क्षणमिव स्थित्वाचचक्षे पुन[2]-
र्जाबालिर्भगवानहो बत[3] रसाद्दीर्घा कथा वर्णिता ।
तद्योऽसौ[4] शुकनाससूनुरनया शप्तो महाश्वेतया
वैशम्पायन एष सोऽद्य शुकतां तेनागतः कर्मणा ॥ ११३ ॥
अपि चा[5]विनयेन कोपितः शुकनासोऽस्य[6] पिता यदब्रवीत् ।
शुक एव वृथा स पाठितः फलितं तच्च[7] वचोऽद्य शापवत् ॥ ११४ ॥
श्रुत्वैतां तु कथां तपोधनगणैः पृष्टः पुनर्विस्मितैः
को हेतुर्भगवन्यदस्य [8]मदनस्तावान्मुनेरप्यभूत् ।
जाबालिः पुनराह नन्वभिहितं स्त्रीवीर्यतः केवला-
दुत्पन्नोऽयमतो रजस्वलतया नारीस्वभावोऽभवत् ॥ ११५ ॥
विरतवचसि तस्मिन्नेत[9]दुक्त्वा महर्षौ
रजनिरपि समाप्तिं सा कथावत्प्रपेदे ।
तदनु मुनिजनेना[10]कारि पूर्वाह्णसंध्या-
समयसमुचितेषु ध्यानकार्येषु सिद्धिः ॥ ११६ ॥

इति श्रीविपश्चिद्वराग्रगण्याचार्यभट्टजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे सप्तमः सर्गः ।

---

## अष्टमः सर्गः ।

अथ [11]मां श्रुतजाबालिप्रो[12]क्ताखिलकथाक्रमम् ।
अस्पृशद्बालभावेऽपि [13]प्राग्जन्मचरितस्मृतिः ॥ १ ॥
श्वेतके[14]तुसुतो भूत्वा [15]शुकनाससुतोऽभवम् ।
स वैशम्पायनोऽद्याहं जातः पुत्रः पतत्रिणः ॥ २ ॥

---

१. 'यावत्' ख. २. 'मुनिः' क. ३. 'बहुरसात्' ख. ४. 'तथ्योऽसौ' ख. ५. 'वा' ख. ६. 'अपि' क. ७. 'तद्वचनं च' ख. ८. 'मनसः' ख. ९. 'एवमुक्त्वा' ख. १०. 'अधायि' ख. ११. 'संश्रुत' क. १२. 'गीताखिल' ख. १३. 'पूर्वजन्मस्मृतिस्तदा' ख. १४. 'श्वेतकेतोः' ख. १५. 'शुकनासात्मजो' ख.

[1]मम जातस्मृतेर्व्यक्ता प्रावर्तत सरस्वती ।
[2]स्वयं प्राग्जन्मविद्याश्च हृदयं प्रतिपेदिरे ॥ ३ ॥
यथैव चान्ये संस्काराः प्राक्तना मामुपागमन् ।
महाश्वेतानुरागोऽपि [3]तथैव समुपागमत् ॥ ४ ॥
[4]अथाभ्यधिकहारीतस्नेहसंवर्धितः क्रमात् ।
गगनाक्रमणे शक्तिमवापं [5]जातपक्षतिः ॥ ५ ॥
दिवसेष्वथ गच्छत्सु [6]शनैरारूढयौवनः ।
गन्तुम[7]ैच्छं महाश्वेताश्रमं [8]तद्दर्शनोत्सुकः ॥ ६ ॥
[9]अचिन्तयं च जन्मेदं विहगस्यापि [10]यातु मे ।
महाश्वेताश्रमो[11]पान्ते तरुकोटरशायिनः ॥ ७ ॥
एकदा त्वथ जाबालेराश्रमं [12]समुपागमत् ।
ताताज्ञया सुहृत्स्नेहपराधीनः कपिञ्जलः ॥ ८ ॥
स [13]च पप्रच्छ हारीतं क्व वैशम्पायनः शुकः ।
उत्पन्नप्रत्यभिज्ञोऽहमयमस्मीत्यवादिषम् ॥ ९ ॥
ततश्चिरमरोदीत्स स्ववक्षसि निधाय माम् ।
वयस्यपुण्डरीकस्य धिगियं[14] वर्तते दशा ॥ १० ॥
[15]मयापि रुदतोक्तोऽसौ किं रोदिषि कपिञ्जल ।
[16]त्वयापि मत्कृते दृष्टा सखे [17]कष्टतरा दशा ॥ ११ ॥
क्व ह्येषा क्व जपाभ्यासः क्व पर्याणं क्व वल्कलम् ।
क्वोपवीतं क्व वा वल्गा क्व मुनिः क्व तुरंगमः ॥ १२ ॥
[18]ततः क्षणमिव स्थित्वा तातसंदेशमब्रवीत् ।
कपिञ्जलः समासेन पुनर्गमनसत्वरः ॥ १३ ॥

---

१. 'उपजात' ख. २. 'मम' ख. ३. 'तेभ्यः पूर्वतरस्तथा' ख. ४. 'ततोऽप्यधिक' ख. ५. 'धुतपक्षतिः' क. ६. 'समुपारूढ' ख. ७. 'ऐच्छन्' ख. ८. 'मुखदर्शनदोहदी' ख. ९. 'अकल्पयं' ख. १०. 'जातु' ख. ११. 'उपान्ततरु-' ख. १२. 'समुपाययौ' ख. १३. 'वै' ख. १४. 'यदियं' ख. १५. 'मया रुदिलाप्युक्तो' ख. १६. 'तथापि' ख. १७. 'कष्टतरी' ख. १८. 'इत्थं' ख.

तातस्त्वा[1]मादिदेशैवं वत्स दोषस्तवात्र कः।
रजोविकृतयो युक्ताः शुद्धस्त्री[2]बीजजन्मनाम् ॥ १४ ॥
[3]अल्पायुषं विदित्वापि [4]जाते त्वयि न यन्मया।
[5]कृता प्रतिक्रिया तत्र तदालस्यं हि मामकम् ॥ १५ ॥
अद्यायुष्कामयागस्तु प्रस्तुतः स समाप्यते।
न यावद्भवता तावन्न गन्तव्यमितः क्वचित् ॥ १६ ॥
अहं त्वदन्तिके स्थातुमिच्छन्नपि निवारितः।
[6]तातेन तत्र कर्मैकदेश[7]लेशाङ्गतां गतः ॥ १७ ॥
इत्याख्याय परिष्वज्य [8]क्रियाभ्यावर्तनेन माम्।
क्रमेणामन्त्र्य स [9]मुनीन्प्रतस्थे दिवमुत्पतन् ॥ १८ ॥
गृहीततातादेशोऽपि काले गच्छत्यहं बलात्।
नीतो वारितवामेन कामेन वशमात्मनः ॥ १९ ॥
अनुभूय चिरं तत्र चित्राः स्मरविभीषिकाः।
[10]अकार्षं धियमुत्क्रा[11]न्तगुर्वाज्ञो गमनं प्रति ॥ २० ॥
एकदा त्वाश्रमं शून्यं वीक्ष्य निर्गततापसम्।
एकाकी सहसोड्डीय प्रस्थितोऽस्म्युत्तरां दिशम् ॥ २१ ॥
अदूरोड्डीन एवाहमनभ्यस्ताध्वलङ्घनः।
[12]क्रान्तस्तृषा च क्लान्त्या च जलं क्वचिदतर्कयम् ॥ २२ ॥
ततः क्वापि पयः पीत्वा किंचिदादश्य चञ्चुना।
विश्रा[13]न्तयेऽविशं श्रान्तस्तरोः कस्यापि कोटरे ॥ २३ ॥
क्षणं तत्र निषण्णस्य तदा मे निद्रया मनः।
गाढया पाशपङ्क्त्या च [14]शरीरकमगृह्यत ॥ २४ ॥

---

१. 'आदिशत्येवं' ख. २. 'वीर्यं' ख. ३. 'अनायुषं' ख. ४. 'याते' ख. ५. 'तव प्रतिक्रियाकारि' ख. ६. 'ततो न' ख. ७. 'लेशी गतागतः' ख. ८. 'क्रियाखभ्यर्थ्य तत्र माम्' ख. ९. 'मुनिः' ख. १०. 'अबोधिषमतिक्रान्त' ख. ११. 'निष्क्रान्त' ख. १२. 'अतस्तृषावान्' ख. १३. 'वीतातपे परिश्रान्तः' ख. १४. 'शरीरं समगृह्यत' ख.

अथ सुप्तोत्थितोऽपश्यमग्रतो नातिदूरगम्।
कृतार्थमिव मातङ्ग[1]युवानं मम बन्धनात्॥ २५॥
आकृत्या कर्मणा[2] चास्य समर्थ्यापिशितार्थिताम्।
प्रार्थनापेशलं किंचिदात्ममोक्षार्थमभ्यधाम्॥ २६॥
भद्र सौम्याकृतिस्त्वं हि न मांसार्थीव दृश्यसे।
नहि मांसार्थिनो युक्तं निद्राच्छेदप्रतीक्षणम्॥ २७॥
तदुन्मुञ्चतु[3] मां भद्र सुखं यामि यथेप्सितम्[4]।
मया बद्धेन कोऽर्थस्ते का[5] विमुक्तेन वा क्षतिः॥ २८॥
सोऽब्रवीन्न स्वतन्त्रेण गृहीतोऽसि[6] मया शुक।
प्रथितस्त्वं हि जाबालेराश्रमे सुचिरं स्थितः॥ २९॥
स त्वं गतो मम स्वामिदुहितुः कर्णगोचरम्।
तन्नियोगाद्गृहीतोऽसि कथमुन्मुच्यसे[7] मया॥ ३०॥
पुनरा[8]ख्याममुं सौम्य युवासि सरवेदनाम्।
जानासि न प्रियोत्कण्ठाकृष्टं मां रोद्धुमर्हसि॥ ३१॥
सोऽभाषत न भृत्येन तरुणेनापि शासनम्।
स्वामिनोऽलङ्घनीयं तत्कथं त्वां त्यक्तुमुत्सहे॥ ३२॥
अवोचं पुनरप्येनं शापाज्जातिस्मरो मुनिः।
शुकीभूतोऽस्मि मां मुञ्च परं पुण्यमवाप्स्यसि॥ ३३॥
स त्वाह नाहं[10] जानामि मुनिं गन्धर्वमेव वा।
राक्षसं वा पिशाचं वा नीत एवासि पक्कणम्[11]॥ ३४॥
इत्युक्त्वादाय पाणौ मामनैषीत्पक्कणं बलात्।
प्रावेशयच्च[12] चण्डालकुमारीवेश्म कश्मलम्॥ ३५॥
दृष्ट्वा तदार्द्रगोमांस[13]वसासृक्पङ्कपिच्छलम्।
प्रोच्छलत्क्रिमि[14] मत्प्राणैरुत्क्रान्तमिव दुर्भगैः॥ ३६॥

१. 'मातङ्गं' ख. २. 'कर्मणो वास्य' ख. ३. 'ततो विमुञ्च' ख. ४. 'यथेहितम्' ख. ५. 'किं विसृष्टेन' ख. ६. 'त्वं धृतोऽसि' ख. ७. 'स कथं मुच्यसे' ख. ८. 'आ-ख्यमिमं ख. ९. 'साधो' ख. १०. 'त्वामहं तु' ख. ११. 'तत्क्षणम्' ख. १२. 'प्रा-विशच्च स' ख. १३. 'गोमांसं' ख. १४. 'प्राणवत्प्राणै रक्षान्तमिव दुर्भगम्' ख.

अथ मातङ्गकन्यायै स मामस्यै न्यवेदयत् ।
स्वामिन्ययमिहानीतः स वैशम्पायनः शुकः ॥ ३७ ॥
साकूतमिव मां वीक्ष्य स्नेह[1]बाष्पार्द्रया दृशा ।
क्षणं वक्षसि धृत्वैषा [2]न्यक्षिपद्बद्धपञ्जरे ॥ ३८ ॥
ततोऽतिमहता [3]चक्रे शोकेन हृदि मे पदम् ।
मुनिर्भूत्वाद्य [4]चण्डाल्या अहं क्रीडाशुकः स्थितः ॥ ३९ ॥
व्यक्तां विदधता वाचं जातिं स्मरयता निजाम् ।
अहो जाबालिना दिव्यदृष्टिनापकृतं मम ॥ ४० ॥
अहो बत महत्कष्टमविषह्यमुपस्थितम् ।
ब्राह्मणेन मया नेयः कालश्चण्डालवेश्मनि ॥ ४१ ॥
भवत्वनशनेनैव [5]त्यजामि हतजीवितम् ।
ताड्यमानोऽपि नाश्नामि न वाचं विसृजामि च ॥ ४२ ॥
एवमुद्वेजितैषा मां हन्याद्वा यदि [6]वा त्यजेत् ।
भवत्युभयथाप्येष[7] पन्थाः श्रेयस्करो मम ॥ ४३ ॥
इत्युपारूढसंकल्पमुपाहृत[8]फलोदुका ।
एषा चण्डालकन्या मामारुयन्मधुरया गिरा ॥ ४४ ॥
फलान्यशान पानीयमुपयुङ्क्ष्व किमीक्षसे ।
[9]भग्नमौनव्रतोऽप्यद्य किं मौनमवलम्बसे ॥ ४५ ॥
मुनिर्जातिस्मरोऽसि[10] त्वं यदि कोऽपि तथापि ते ।
तिर्यग्जात्यु[11]चिता प्राणवृत्तिरेवाद्य सं[12]मता ॥ ४६ ॥
[13]न तिर्यगधिकारं हि शास्त्रं शास्त्रविदो विदुः ।
तिरश्चां क्व च संस्काराश्चौडोप[14]नयनादयः ॥ ४७ ॥
भक्ष्याभक्ष्याविचारादि यदि [15]चौद्य चिकीर्षसि ।
तत्किमुच्छिष्टशौचादि नाश्रमेऽप्याश्रितं त्वया ॥ ४८ ॥

---

१. 'बद्धार्द्रया' ख. २. 'प्राक्षिपद्बद्ध' ख. ३. 'दध्रे' ख. ४. 'चाण्डाल्या सोऽहं लीलाशुकः कृतः' ख. ५. 'त्यजामीह तु' ख. ६. 'वोत्सृजेत्' ख. ७. 'एवं' ख. ८. 'फलोच्चया' ख. ९. 'भण मौनव्रतोऽस्यद्य' क. १०. 'वा त्वं' ख. ११. 'उचिताचारवृत्ति' ख. १२. 'शास्त्रिता' क. १३. 'नातिर्यगधिकारी हि शास्त्रे' ख. १४. 'चौल-' ख. १५. 'वाद्य' ख.

[1]आपत्काले द्विजातीनामप्यनाश्यं न विद्यते ।
[2]हस्तादस्माकमादत्त विश्वामित्रः श्वजाघनीम् ॥ ४९ ॥
कृतद्वि[3]त्रोपवासोऽपि जिहासुरिव जीवितम् ।
लक्ष्यसे वत्स मामैवं [4]कृथा भुङ्क्ष्व फलोदकम् ॥ ५० ॥
इत्यचण्डालसदृशैर्वाक्यैरस्त्रीजनोचितैः ।
तस्या विस्मयमानोऽहं चिरमेवमचिन्तयम् ॥ ५१ ॥
नूनमेषा न [5]चैण्डाली मद्धृत्केनापि कर्मणा ।
[6]मन्ये गतिमिमां प्राप्ता [7]मदर्थेनैव वा पुनः ॥ ५२ ॥
बिभर्त्युरसि मातेव पश्यति स्निग्धया दृशा ।
वक्ति चैवमतोऽमुष्याः करोमि वचनं वरम् ॥ ५३ ॥
इति मत्वासृजं वाचमभवं भोजनोन्मुखः ।
अभोजयच्च मामेषा जननीव दिने दिने ॥ ५४ ॥
तत्त्वमस्याः परिज्ञातुमन्वहं प्रार्थनां व्यधाम् ।
न त्वेषा प्रार्थ्यमानापि निजं [8]रूपमदीदृशत् ॥ ५५ ॥
नित्यमा[9]शङ्कमानोऽहमे[10]तां कामपि देवताम् ।
पोष्यमाणोऽनया कालमनैषं तत्र [11]पक्कणे ॥ ५६ ॥
एकदा [12]च त्रियामान्ते परित्यक्तोऽस्मि निद्रया ।
अद्राक्षं पक्कणं सर्वमार्यप्रायजनावृतम् ॥ ५७ ॥
आत्मानं च नवोदारहेमपञ्जरवर्तिनम् ।
कन्यकामी[13]दृशीं चैतां दृष्टा देवेन यादृशी ॥५८॥ (युगलकम्)
[14]ततोऽहं किमहं तत्र रक्षितश्चिरमेनया ।
कस्य हेतोरिहानीत इति राजन्न वेद्म्यहम् ॥ ५९ ॥

---

१. 'आपत्सु च' ख. २. 'अस्माभिर्दत्तमादत्ते विश्वामित्रः स जीवितं' ख. ३. 'द्वित्र्युपवासो हि' ख. ४. 'कुला पिब' ख. ५. 'चाण्डाली' ख. ६. 'मघ्यां' ख. ७. 'मदर्थे तापिता' ख. ८. 'तत्त्वं' ख. ९. 'आशङ्क्यमानो' ख. १०. 'एनां' ख. ११. 'पञ्जरे' ख. १२. 'तु' ख. १३. 'तादृशीं' ख. १४. 'ततः केयं किं तथात्र चिरमस्थोहमेतया' ख.

इत्याकर्ण्य कथामेतां वैशम्पायनवर्णिताम्।
स राजा शूद्रकः शय्यागृहादङ्गनमागमत्॥ ६०॥
ससंभ्रमं च निर्गत्य तूर्णमानाययत्पुनः।
आस्थानावसरे दृष्टां तां मातङ्गकुमारिकाम्॥ ६१॥
अथ सा प्रविश्य विततेन तेजसा ददतीव दिक्षु शरदिन्दुचन्द्रिकाम्।
जिततारवेणुरवभिन्नवल्लकीध्वनिना स्वरेण गदितुं प्रचक्रमे॥ ६२॥
हे रोहिणीरमण सर्वकलानिकेत
तारापते रजनिनाथ सुधानिधान।
कादम्बरीरसगुणेषु निबद्धभाव-
मात्मानमर्पितशरीरमनुस्मरेन्दो॥ ६३॥
मां च विद्धि शशकेतन श्रियं साहमस्य जननी दुरात्मनः।
पूर्वचेष्टितमवैत्वतो भवानित्यमुं तव समीपमानयम्॥ ६४॥
अयमपि गुरुशासनां विलङ्घ्य स्मरपरतन्त्रमनाः प्रयातुकामः।
अविनयपरिशङ्किना तदानीमविकलयोगदृशा व्यलोकि पित्रा॥ ६५॥
तस्याज्ञयैवमनुभावयितुं विपाक-
मासन्नमेव गुरुशासनलङ्घनस्य।
अत्रावतीर्य विपिने जनसङ्गभीत्या
मातङ्गभङ्गिमवलम्ब्य तथा स्थितास्मि॥ ६६॥
गच्छन्तमेनं विनयस्य पाशैस्तीव्राणि दुःखान्यनुभावयन्ती।
शापावसानं युवयोः कृतोश्च समाप्तिमासं चिरमीक्षमाणा॥ ६७॥
मुनेरवभृथावधिः पितुरमुष्य सिद्धः क्रतुः
कृतस्त्वमपि संस्मृतस्वतनुरद्य तच्छासनात्।
तदुज्झितमलीमसेदृशशरीरयोगौ युवां
निजेन वपुषाधुनानुभवतां प्रियासंगमम्॥ ६८॥

---

१. 'निर्मिताम्' ख. २. 'सद्यो गृहादङ्गणं' ख. ३. 'प्रष्टुं' ख. ४. 'तततार' ख. ५. 'भारं' ख. ६. 'अवैति' क. ७. 'शासनं' ख. ८. 'लङ्घनोत्थं' ख. ९. 'सद्योऽवतीर्य' ख. १०. 'त्वमसि संस्मृत' क. ११. 'तदुद्धृत' ख.

इत्युक्त्वोच्चैर्गमनरभसप्रश्लथीभूतबन्ध-
स्रग्विस्रस्तैः कुसुमविदलैरर्चयित्वेव पृथ्वीम् ।
दिक्चक्रं च प्रचलरशनानूपुरोत्थैर्निनादै-
रामन्त्र्येवं द्रुतमुदपतद्व्योमसौ दिव्यकान्तिः ॥ ६९ ॥

स्वतनुकान्तितिरस्कृतचन्द्रिकां गगनमुत्पतितामवलोक्य ताम् ।
सुचिरमूर्ध्वनिवेशितलोचनः कमपि विस्मयमाप जनोऽखिलः ॥ ७० ॥

अथास्य राज्ञो हृदि शूद्रकस्य निरस्तधैर्यादिगुणप्रबन्धः ।
कादम्बरीसंस्मरणानुबन्धलब्धावकाशो मदनो जजृम्भे ॥ ७१ ॥

न राजलक्ष्मीं बहु मन्यते स नोर्वीं न कीर्तिं न सरस्वतीं च ।
स तद्रसक्षीव इवाललम्बे कादम्बरीमेव नितान्तमन्तः ॥ ७२ ॥

पराङ्मुखः स्पर्शरसेष्वजस्रं नादत्त कर्णौ मधुरेऽपि स ध्वनौ ।
जगाम निर्लक्ष्यनिविष्टलोचनः क्रमेण सर्वेन्द्रियवृत्तिशून्यताम् ॥ ७३ ॥

न गुरोरुपदेशमग्रहीद्बुबुधे वस्तु ततो न मूढधीः ।
यतते स्म न तस्य सिद्धये न परिस्पन्दितुमप्यपारयत् ॥ ७४ ॥

भूताभिभूत इव मूढ इव क्रमेण
निःसंज्ञतां विरहवेदनयोपनीतः ।
मुक्त्वा मयोभवरुजं सुचिरं स राजा
प्राणान्मुमोच सहसैव विहंगमोऽपि ॥ ७५ ॥

जीवात्मकं चान्द्रमसं च तेजः कृतास्पदं तस्य तनौ यदासीत् ।
तदेव संक्रान्तमथान्यदेहे चित्रा हि विश्वप्रकृतेर्विकाराः ॥ ७६ ॥

अत्रान्तरे चित्ररथात्मजायास्तनुं प्रियस्यान्वहमर्चयन्त्याः ।
तथैव कालः सुमहानगच्छदच्छोदतीरे तपसि स्थितायाः ॥ ७७ ॥

अथ मधुसमये विजृम्भिते सा मदनमहोत्सववासरे सरागम् ।
मलयजघनसारहारपुष्पैस्तनुमतिमात्रमलंचकार भर्तुः ॥ ७८ ॥

---

१. 'वदलैः' ख. २. 'एवं' ख. ३. 'धैर्यद्विगुण' ख. ४. 'स' ख. ५. 'अमुष्य तत्केवलमाललम्बे' ख. ६. 'उपनीतां' ख. ७. 'भुक्त्वा मनोभवरुजः' ख. ८. 'तच्च' ख. ९. 'अथापरत्र' ख. १० 'तत्रैव' ख.

तं वीक्ष्य तापसदृशापि तदा जगाम
कामस्य गोचरमसौ मधुजृम्भितस्य।
एकाकिनी सपदि दिक्षु निधाय चक्षुः
कान्तं स्वपन्तमिव निर्भरमालिलिङ्ग॥ ७९॥

चन्द्रापीडं सा च जग्राह गाढं कण्ठस्थाने जीवितं च प्रपेदे।
तेनापूर्वां सा समुल्लासलक्ष्मीमिन्दुस्पृष्टा सिन्धुवेलेव भेजे॥ ८०॥

शिलाशय्यां त्यक्त्वा तदनु चिरसुप्तोत्थित इव
क्षणं स्थित्वा जृम्भालसवदनमुन्मील्य नयने।
ततश्चन्द्रापीडः प्रहतमुरजध्वानपटुना
स्वरेण स्वेनैव स्मितमधुरमाह प्रियतमाम्॥ ८१॥

त्वमृतप्रभवेऽप्सरसां कुले सुतनु जन्म समर्थितवत्यसि।
यदमुना परिरम्भलवेन ते सपदि जीवितमापदयं जनः॥ ८२॥

मामन्वबीभवदिमामियतीमवस्थां
शापः कलङ्क इव कान्तिहरो द्वितीयः।
त्वद्विप्रयोगकृत एव वभूव ताप-
स्तन्वङ्गि शूद्रकतनोरपि मृत्यवे मे॥ ८३॥

संरक्षिता तनुरियं तु तव प्रियेति
शापः कृशोदरि विरामवाप पापः।
अद्यप्रभृत्यखिलमेव हि चन्द्रलोकं
शाधि स्वपादकृतमुद्रमिमं च लोकम्॥ ८४॥

सख्याः प्रियं पितृतपोभिरवाप्तदिव्य-
जीवं कपिञ्जलकरार्पितपाणिपद्मम्।
मन्मण्डलादवतरन्तमखण्डकान्ति-
मापाण्डुगण्डमवलोकय पुण्डरीकम्॥ ८५॥

कौतूहलात्सह मयैव गतेन्दुलोक-
मालोकयिष्यसि कदाचन पत्रलेखाम्।

---

१. 'दृशो' ख. २. 'अपूर्वं' ख. ३. 'वदनपङ्केरुहरुचिः। बभाषे पीयूषद्रवनिवहसंस्पर्धिभिरयं वचोभिस्तामुच्चैः सपदि दरमानन्दविवशः॥' ख. ४. 'तदमृत' क. ५. 'कुलेष्वतनु' ख. ६. 'बलेन' ख. ७. 'शापः कृशोदरि स कान्तिहरो' ख. ८. 'चिरं समवाप' ख. ९. 'अमुं' ख.

क्वापि प्रिये सहचरी मम सा ततस्त्या
मा ते[1]ऽव्यभूत्तदनवाप्तिकृतो विषादः ॥ ८६ ॥
श्रुत्वेति तस्य गिरमुत्सुकतां गतासौ
रोमाञ्चकञ्चुकमकृत्रिममुद्वहन्ती ।
कादम्बरी चरणयोर्निपपात पत्यु[2]-
रानन्दबाष्पकणशीकरितेक्षणश्रीः ॥ ८७ ॥

उत्थाय त्वरितोपसृत्य च महाश्वेतां परिष्वज्य सा
प्रत्यक्षीकृतपुण्डरीकपदवीं कृत्वा च लब्धोत्सवाम् ।
दिष्ट्या वर्धयितुं न्ययुङ्क्त रभसेनाहूय केयूरकं
तारापीडतपोवने [3]परिजनं पित्रोर्गृहे चापरम्[4] ॥ ८८ ॥
तारापीडः [5]क्लेशपरिणतोऽप्याययौ तत्र तूर्णं
सानन्दान्तःपुरपरिजनामात्यवर्गानुयातः ।
[6]तस्मिन्काले सखिसहचरः पुण्डरीकोऽपि नाका-
त्किंचिल्ल[7]ज्जानतवदनो वल्लभां स्वामुपेतः ॥ ८९ ॥
चन्द्रापीडः स्वामपि जानन्नथ मूर्तिं
तारापीडं पुत्रवदेव प्रणनाम ।
[8]तद्वत्तं च प्रश्रयशीलं शुकनासं
दत्तानन्दोऽवन्दत सर्वाश्च [9]जनित्रीः ॥ ९० ॥
माया धातुरियं भवेद्भगवतः किं श्वेतकेतोरिदं
सामर्थ्यं तपसामथेन्दुमहसामत्रेन्द्रजालायितम् ।
वैशम्पायन इत्यवेदि यदसावेकोऽपि [10]तद्बन्धुभि-
[11]र्यैश्चासौ स तु पुण्डरीक इति ते तस्मिन्भवे संस्थिताः ॥ ९१ ॥
स पुण्डरीको मुनिरप्यपश्यदात्मानमन्तः शुकनासपुत्रम् ।
प्रणम्य [12]भूमौ पितरं क्रमेण [13]मनोरमाद्या जननीर्ववन्दे ॥ ९२ ॥
अथ विलासवती समनोरमा स्तनयुग[14]स्तुतदुग्धकणावलिः ।
[15]सुतवपुःपरिरम्भमहोत्सवं फलितसर्वमनोरथमन्वभूत् ॥ ९३ ॥

---

१.'तेऽप्यभूत्' ख. २. 'भर्तुः' ख. ३. 'परिगतं' ख. ४. 'वापरम्' ख. ५.'परिणतिक्लशो' ख. ६.'अस्मिन्' क. ७.'लज्जावनमितमुखो वल्लभाभ्यासमभ्यैत्' ख. ८.'मूर्धा तद्वत्' ख. ९. 'सवित्री' क. १०. 'यद्बन्धुभिः' ख. ११. 'यच्चामंसत' ख. १२. 'भूपं' ख. १३. 'मनोरमाख्यां जननीं' ख. १४. 'स्रुतपयोधरबिन्दुकणावली' ख. १५. 'सुतवधू' ख.

तारापीडस्तु [1]पादानतमनवरतप्रस्रुतानन्दबाष्प-
श्चन्द्रापीडं भुजाभ्यां [2]कथमपि सहसोत्थाप्य कण्ठे गृहीत्वा ।
शापेनात्रावतीर्णो यदि तदपि भवानुत्तमो लोकपालः
प्रख्याप्येति प्रतीपं प्रणततनुरसावस्य पादौ ववन्दे ॥ ९४ ॥
तस्मै निवेद्य [3]नृपचक्रमनिच्छतेऽपि
यत्नात्[4]क्रमोपनतया सह राजलक्ष्म्या ।
नो[5]ज्झांचकार चिरसंचितमाश्रमं स-
त्प्रार्थितोऽपि महिषीसहितश्चतु[6]र्थम् ॥ ९५ ॥
आजग्मुस्तत्र वल्गत्तुरगखुरपुटोद्धूतधूलीकडारै-
[7]श्चूडाप्रत्युप्तभास्वन्मणिरुचिरुचिरैः शोभमानाः शिरोभिः ।
चन्द्रापीडेन्दुसंदर्शन[8]रभससमुत्फुल्ललोलेक्षणाब्जा
निर्व्याजौत्सुक्यसज्जीकृतनिरतिशयोपायनाः पार्थिवेन्द्राः ॥ ९६ ॥
संकल्पाधिकलाभह[9]र्षरभसोज्जृम्भाविलोलीभव-
द्गन्धर्वप्रमदाकदम्बक[10]कृतक्रीडाकरास्फालनाम् ।
[11]सार्धं चित्ररथस्ततो मदिरया हंसश्च गौर्या सह
द्रष्टुं [12]नृत्तमयीमिव व्यवसितामाजग्मतुर्मेदिनीम् ॥ ९७ ॥
ताभ्यामेत्य निरस्य तापसतनुच्छायां दुहित्रोः कृते
भास्वत्कौतुकमङ्गले नव[13]वधूवेषे मनोहारिणि ।
निर्वृत्ते च [14]समन्त्रहोमसुभगारम्भे विवाहोत्सवे
तत्रान्योन्यसमागमप्रमुदिताः सर्वे [15]मुदं लेभिरे ॥ ९८ ॥
इति विततविलासः पुण्डरीकेण [16]साकं
दिवि भुवि च विचित्रोद्यानलीलाविहारः ।
अभिमतफलसंपद्वर्धमानाभिनन्दः
श्रियमभजत चन्द्रापीडमूर्तिर्मृगाङ्कः ॥ ९९ ॥

इति श्रीसकलविपश्चिच्चक्रवर्तिश्रीभट्टजयन्तसूनोरभिनन्दस्य कृतौ कादम्बरीकथासारे अष्टमः सर्गः ।

---

१. 'पादावनतमपि मुहुः' ख. २. 'कथमिव' क. ३. 'निजचक्रं' क. ४. 'क्रमोपचितया' ख. ५. 'अङ्गीचकार करसंभृतं' ख. ६. 'तदर्थैः' ख. ७. 'चूडारत्नप्रवालोज्ज्वल' ख. ८. 'रसरभसोत्फुल्ल' ख. ९. 'रभसौ जृम्भा' ख. १०. 'पदक्रीडा' ख. ११. 'सर्वं' ख. १२. 'नृत्तमयातिभव्यभवनां' ख. १३. 'बृहद्वेषे' ख. १४. 'सुमन्त्र' ख. १५. 'समं रेजिरे' ख. १६. 'सार्धं' ख.